गत्वां तादृशोपहारं कुर्वन्ति । ततः परं कन्या वरकुलस्य नाम लभते । आस्माके विधौ विवाहोत्तरं वध्वा गोत्रपरिवर्तनं भवति। जरठोष्ट्रीयेषु वाग्दानानन्तरम् उभयोर्गृहयोर्दीपप्रज्वालनं भवति प्राभृतविनिमयश्च ।

शुभायां तिथौ विवाहो भवति। जरठोष्ट्रीयाः पुरा दिवैव औद्वाहिकं कर्माकुर्वन् । ईराणदेशे अधुनापि स एव क्रमो वर्तते । परन्तु अधुना भारतवर्षे सूर्यास्तमनाद् अनन्तरं विवाहो भवति । यदा जरठोष्ट्रीया ईराणदेशाद् भारतवर्षे सन्जान्-नगरं प्राप्तास्तत्रत्यो यादववंशीयो राजा तैर्यान् समयान् अकरोत् तन्मध्ये एकस्त्वयमेवासीद्यत् सायमेव तैरौद्वाहिकं कर्म करिष्यत इति ।

प्रथमं वरवध्वोः प्रातरपराह्णे वा पवित्रोदकैः स्नानं भवति। वरो विशिष्टमौद्वाहिकं वेषं धारयति दीर्घं कुंकुमतिलकं च। वधूरपि वर्तुलं तिलकं लभते । समवेताः स्वजनाः सुहृदश्च वराय तत्पित्रे च प्राभृतानि प्रयच्छन्ति । वध्वा गृहेऽपीदृशं प्राभृतदानं भवति। वरगृहाद् वध्वर्थं प्राभृतप्रेषणं भवति। अस्मद्विवाहेऽपि वस्त्रादिकं प्रेष्यते । तदनन्तरं वरयात्रा भवति।

यदा वरो वधूगृहमागच्छति द्वारि तस्य स्वागतं क्रियते । अस्मद्विवाहेऽपि द्वारपूजा प्रसिद्धा। वराय तिलकदानम् अक्षतदानं च क्रियते। वरवध्वौ च परस्परोपरि अक्षतं विकिरतः। तदनन्तरम् एकमण्डं वरस्य शिरोदेशे त्रिः परावर्त्य भूमौ निपात्यते भिद्यते च। एवमेकं नारिकेलं परावर्त्य भिद्यते। अस्मास्वपि स्वागते नारिकेलदानं भवति । अण्डभेदनं प्राचीनकाले प्रचलितस्य अतिथ्यर्थे मधुपर्के पशुशातनस्यानुकल्प इव प्रतिभाति। मधुपर्के अर्घ्यस्य पादप्रक्षालनं भवति। जरठोष्ट्रीये विवाहकर्मणि वरवध्वोरुभयोरेव पादप्रक्षालनमाचारपूतमस्ति ।

विवाहस्थले अग्निप्रज्वालनं दीपदानं च भवतः। तदनन्तरं वरवध्वौ प्रागाभिमुख्येनोपविशतोऽनन्तरं च पूर्वाभिमुखीभूय एकस्यामेव पङ्क्तौ । बान्धवाः सुहृदश्च सन्निहिता भवन्ति। वरवध्वोर्हस्तयोर्बन्धनं भवति। अत्रापि पाणिग्रहणवेलायां हस्तयोर्बन्धनं क्रियते । पाणिग्रहणानन्तरं पूर्वप्रज्वालितेऽग्नौ धूपः प्रक्षिप्यते । वरवध्वावपि परस्परोपरि अक्षतान् प्रक्षिपतः ।

एतदनन्तरं सन्निहितयोर्द्वयोः पुरोहितयोर्वर्षीयांस्तौ पृच्छतो विवाहार्थं सम्मतौ स्तो न वेति। तौ साक्षिद्वारा सम्मतिं सूचयतः। **एषा सम्मतिरेव जरठोष्ट्रीयविवाहे प्रधानं कर्म।** एतदर्थं यानि वाक्यानि उच्चार्यन्ते तानि पह्लवीभाषामयानि भवन्ति। सन्जान्-नरेशेन कृतेषु समयेषु एक आसीत् एतानि वाक्यानि संस्कृतभाषायामपि वाच्येरन् इति। अधुनापि बहुषु कुलेषु सम्मतिवाक्यानि संस्कृतभाषायां पठ्यन्ते। पुरोहितेन पृष्टो वरो वधूग्रहणार्थं सम्मतिं व्यनक्ति वधूरपि वरग्रहणार्थम्। अस्मद्विवाहे वरो वधूम् आदिशति सा तदनुगामिनी स्यादिति। यथा बोधायनगृह्यसूत्रे "मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते। मम वाचमेकमनाः शृणु मामेवानुव्रता सहचर्या मया भव॥" इत्यादि (१/४/१)। परम् ऋग्वेदीयौ मन्त्रौ वध्वाः पतिकुले प्रभावं दिशतः, "गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि (१०/८५/२६)"। सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव। ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु॥ (१०/८५/४६)"। सम्मतिप्रदानानन्तरं पुरोहितो वध्वा दक्षिणहस्तं वरस्य दक्षिणहस्ते निदधाति प्रावरवस्त्रेण च तौ वेष्टयति "यथा अहू वइर्यो" इत्यवेस्तीयमन्त्रं पठित्वा तस्मिन् वस्त्रे ग्रन्थिबन्धनं च करोति। अन्ते उभौ पुरोहितौ वरवध्वोः कृते सुदीर्घाण्युपदेशवाक्यानि आशीर्वादांश्च व्याहरतः। एतेषामुपदेशवाक्यानां प्रातिरूप्यं तैत्तिरीयोपनिषदि वेदग्रहणात् परं स्नातकाय आचार्यानुशासनं (१/११/१-४) मनुस्मृतेश्चतुर्थाध्याये स्नातकधर्मेषु च दृश्यते। ऋक्संहितायामपि वध्वाः कृतं आशीर्वचनं श्रूयते "सुमङ्गलीरियं वधूरिमां समेत पश्यत। सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन॥ (१०/८५/३३)" वरवधूपादप्रक्षालनमाशीर्वादानन्तरमेव भवति। ततो वरवध्वा एकस्मात् पात्रादादाय दधिमिश्रं भोजनं कुरुतः। एतादृशं सहभोजनं बङ्गदेशे विवाहरात्रौ चतुर्थीकर्मरात्रौ च भवति। अन्ते समवेतानां बान्धवानां सुहृदां च भोजनं भवति। एवमस्मास्वपि।

अधुना अन्त्येष्टिसंस्कारो वर्ण्यते। यदा कोऽपि मरणासन्नो भवति तद्गृहे कोऽपि कक्षो जलेन प्रक्षाल्यते, तत्कोणे च सिकताविकिरणं शिला-

स्थापनं वा क्रियते। अनन्तरं मुमूर्षोः समीपे "अषेम्-वोहू–" मन्त्रस्य "अहुन-वइर्य" मन्त्रस्य च पाठः क्रियते। सत्यां शक्तौ मुमूर्षुरपि मन्त्रपाठं करोति। आस्माकप्रक्रियासु रामनामोच्चारणं हरिसंकीर्तनं वा क्रियते। प्राणनिर्गमनानन्तरं शवदेहस्यं जलेन स्नपनं भवति सुद्रह्-कुश्त्योः परिधापनं च। अनन्तरं स देहः श्वेतवस्त्रेण आच्छाद्यते, प्रागुक्तसिकतोपरि शिलोपरि वा निधीयते च। आस्माकसंस्कारे श्मशाने चितारोपणात् पूर्वं शवदेहस्य स्नपनं नूतनवस्त्रेण आच्छादनं च सम्पाद्येते। शवदेहस्य सिकतोपरि शिलोपरि वा स्थापनात् परं "द्रुज्-इ-नसुष्" इत्यस्य दएवस्य तच्छरीरोपरि प्रभाव आपतति। तद्वारणाय अग्निः प्रज्वाल्यते तस्मिन् चन्दनकाष्ठधूपयोः प्रक्षेपः क्रियते, एकः पुरोहितश्च मन्त्रपाठं करोति। ततः परं भ्रुवोरुपरि वर्तुलचिह्नद्वयेनोपेत एकः श्वा मृतकशरीरं जिघ्रति। एतत्कर्म "सग्-दिद्" इति कथ्यते। अत्र ऋग्वेदीया ऋक् "यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ। ताभ्यामेनं परि देहि राजन् स्वस्ति चास्मा अनमीवं च धेहि॥" (१०/१४/११) अनुसन्धेया, शवदेहं प्रत्यागच्छतामसुराणाम् अपाकरणार्था च ऋक् "अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन्। अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै॥" (१०/१४/९) इति। सग्-दिद्- कर्मणः प्राक् नसेह-सालार् इत्याख्यौ द्वौ पुरुषौ वाजाख्यं मन्त्रमुपांशु पठतः। वैदिकयज्ञेष्वपि असुरवञ्चनार्थम् उपांशु मन्त्रपाठो दृश्यते। वाजकर्मानन्तरं द्वौ पुरोहितौ अहुनवइत्ति-गाथानां (यस्न २८-३४) पाठं कुरुतः। तदनन्तरं सग्-दिद्-कर्म क्रियते। ततः परं तौ साधारण्येन मौनगृहत्वेन विदितं दख्म- संज्ञकं ग्रामान्नगराद्वा वहिः स्थितं गृहं प्रति शवदेहं नयतः। अन्येऽपि जना दूरतः शवमनुगच्छन्ति। सर्वे द्विश एव चलन्ति। केवलं नसेह्-सालाराख्यौ पुरुषौ दख्मान्तः प्रविशतः। तौ शवशरीरामाच्छादनहीनं कृत्वा निर्दिष्टे स्थाने निधत्तः तत्र गृध्रा अस्थ्यवशेषं शवदेहं भक्षयन्ति। शववाहकौ बहिरागत्य सूचयतः शवसादनकर्म सम्पन्न-मिति। तदनन्तरं पुनः वाज- मन्त्र-पाठः क्रियते। पुरोहितौ च "यथा अहू वइर्यो" "कॅम्-ना-मज़्दा" इति मन्त्रौ पठतः। तदनन्तरं पुरोहितपुरःसराः

शवानुगामिनः प्रत्यावर्तन्ते। गृहं प्रत्यागताः स्वजनाः स्नानं कुर्वन्ति। आस्माकप्रक्रियायां शवदाहात् परं दाहकर्ता अन्ये च शवानुयायिन आसन्नायां नद्यां समीपस्थे तडागे वा स्नानं कुर्वन्ति। शवनिधानात् परम् उपरतस्य गृहे दिनत्रयपर्यन्तम् अग्निर्निरन्तरं ज्वलति, स्वजनाश्च निवृत्तमांसा भवन्ति। दिनत्रयं यावत् स्रओषाख्य-यज़तस्य स्तुतिः क्रियते। आस्माकप्रयोगे दिनदशकपर्यन्तं शाकहीनं निरामिषभोजनं क्रियते। दाहकर्ता सकृद् हविष्यान्नं क्वचिल्लवणहीनं भुंक्ते।

चतुर्थे दिने उपरतस्य आत्मा चिन्वत् इत्याख्यं सेतुं तरति। तस्यापरपारे मिथ्रो रश्नुश्च यजतौ उपरतस्य सुकृतदुष्कृतयोर्विषये विमर्शं कुरुतस्तदनुसारं च तस्य गतेर्विधानं कुरुतः। स्रओषश्च तत् सर्वं वीक्षते। स्वजना उपरतस्य कल्याणाय प्रार्थनं कुर्वन्ति। प्रतिवत्सरं च ते विशिष्टप्रार्थनादिकं विदधति। अस्मास्वपि प्रतिवत्सरं श्राद्धं भवति।

समाप्तानि गृह्यकर्माणि। अधुना श्रौतकर्मप्रतिरूपाणि कर्माणि संक्षेपेण वर्ण्यन्ते।

प्रथमं तावद् अग्न्याधानकर्म। जरठोष्ट्रीयैस्त्रिविधा अग्नय आधीयन्ते (१) **आतिष् बह्राम्,** (२) **आतिश् आदरान्** (३) **आतिष् दाद्गाह्** इति च। एषु अभ्यर्हिततम **आतिष् बह्राम्** (अग्निर्वृत्रहा)। **वेन्दिदाद्** (८/८१-९६) षोडशविधानाम् अग्नीनां मेलनेन तस्याग्नेः सम्पादनं विदधाति। आश्चर्यमेतद् यत्तेषु प्रथमश्चिताग्निः। शवदेहस्य दाहो जरठोष्ट्रीयेषु निषिद्धः, परन्तु धर्मान्तरावलम्बिनः शवो यस्मिन्नग्नौ प्रदग्धः सोऽग्निर्ग्राह्य एव। **हेरोदोतुस्**-नामकेन यवनैतिहासिकेन स्वकीयइतिहास उक्तं मृतदेहस्य गृध्रेभ्यो भक्षणार्थं विसर्जनं मगानामेव विशिष्ट आचार आसीत् (१/१४०)। कुरुधारयद्वसु-प्रभृतीनां पारस-वंशीय-राजानां मृत्योरनन्तरं तेषां शवस्य पूर्वमेव निर्मिते शवगृहे निधानमक्रियत। धारयद्वसुना जीवतैव नक्श्-इ-रुस्तम् इत्यत्र स्वकीयं

निधानगृहं रचितं तत्र शिलीमुखाक्षरैर्लेखश्चोत्कीर्णः। इन्दोयोरोपीयेषु बहुषु जनेषु मृतकशरीरमदह्यत। तस्यैव आचारस्य प्रभाव "आतिष्-बह्राम्" इत्यग्नेः स्थापने विद्यते अथवा भारतीयाचारस्येति न स्पष्टम्। आस्माके स्मार्ततर्पणेषु देवपितृतर्पणे प्रथमम् अग्निष्वात्तानां पितॄणां तर्पणं क्रियते। आतिष्-बह्राम् इत्यस्य कृते आवश्यका अन्येऽग्नयस्त्विमे (२) वस्त्ररञ्जकाग्निः, (३) राज्ञो राजपुरुषस्य वा गृहात् संगृहीतोऽग्निः, (४) कुलालाग्निः, (५) इष्टकाग्निः, (६) तपस्विनोऽग्निः, (७) स्वर्णकाराग्निः, (८) मुद्रानिर्माणाय विनियुक्तोऽग्निः, (९) लौहकाराग्निः, (१०) शस्त्रनिर्मातुरग्निः (११) गोधूमादिनिष्पन्नशष्कुलीकारस्याग्निः, (१२) सुराकृतोऽग्निः, (१३) सैनिकस्य पान्थस्य वाग्निः, (१४) अविपालस्याग्निः, (१५) वैद्युताग्निः, (१६) आवसथ्याग्निरथवा कस्यापि जरठोष्ट्रीयस्य गृहादानीतश्चाग्निः।

एतेषाम् अग्नीनां मन्त्रपाठेन सह धूपचन्दनकाष्ठादिना बहुशः संस्कारः क्रियते। तदनन्तरं यस्नस्य वेन्दिदादश्च पाठेन अभिमन्त्रणं विधीयते। ततः परं षोडशानाम् अग्नीनां मेलनं भवति। मिलितस्याग्नेरप्यभिमन्त्रणं क्रियते, पश्चाच्चाग्निगृहस्य। मुख्य-पुरोहितपुरःसरा अन्ये पुरोहिता खड्गं दण्डं च धारयन्तो महता समारोहेण सह आतिष्-बह्राम्-अग्निम् अग्निगृहं नयन्ति, बृहच्छिलोपरि निहिते बृहति धातवपात्रे मन्त्रपाठेन सह स्थापयन्ति, धूपचन्दनकाष्ठैश्च तस्मिन् होमं कुर्वन्ति। सोऽग्नेराधारो राजासनम् इति व्यपदिश्यते। एवम् अग्निष्टोमयागे दीक्षातश्चतुर्थदिवसे अपराह्णे होतृषु शस्त्रपाठं कुर्वत्सु उद्‌गातृषु च स्तोत्रपाठं कुर्वत्सु अग्नीषोमौ प्राग्वंशशालातो महावेदिं प्रति नीयेते। यस्मिन्नासने सोमो निधीयते तस्याख्या राजासन्दीति।

प्रतिष्ठापितोऽयमग्निर्वृत्रहा विशिष्टगुणसम्पन्नेनैव पुरोहितेन प्रतिदिनं पञ्चधा धूपेन चन्दनकाष्ठैश्च मन्त्रपाठेन सह आहुत्या परिचर्यते। अग्न्यगारस्य गर्भगृहं पुरोहितादन्यो न कोऽपि प्रवेष्टुम् अर्हति। एवं द्रविडदेशेषु स्मार्तमन्दिरेषु अयमेव नियमः। मुख्य-पुरोहितश्चतसृषु दिक्षु चतसृषु अनुदिक्षु

भूयश्च आद्यस्थाने तिष्ठन् बह्रामग्नौ मन्त्रपाठेन सह चन्दनकाष्ठमयीं समिधमादधाति। एवं वैदिकइष्टियागे होत्रा सामिधेनीमन्त्रेषु साधारण्येन पञ्चदशसंख्याकेषु शस्यमानेषु प्रतिमन्त्रमेकां समिधमग्नौ प्रक्षिपति। एकादशे मन्त्रे पठिते अध्वर्युरेकमिध्मकाष्ठम् अवशेष्य शिष्टान् इध्मखण्डान् सममग्नौ प्रक्षिपति। अग्निपरिचर्यानन्तरं पुरोहितो मन्त्रपाठेन सह हुमत- हूख्त-ह्वर्श्त-संज्ञानां त्रयाणां धर्माणामग्ना उत्सर्गं करोति। एवं वैदिकेऽग्निहोत्रे पयसो द्रव्यान्तरस्य वा अभावे अग्नौ श्रद्धा हूयते। अनन्तरं मन्त्रोच्चरणेन सह आतिष्-बह्रामग्नौ धूपस्य चन्दनकाष्ठखण्डानां च भूयः प्रक्षेपः क्रियते। अन्ते च समन्त्रको घण्टानिनादः।

**आतिष्-बह्रामग्नेः** शाला अल्पसंख्याका एव। प्रथमा शाला सन्जान्-नगरे स्थापिता। अधुना आसां संख्या पारसीकेषु दशावरा। अस्त्यन्योऽग्निर् **"आतिष् आदरान्"** (अग्नीनामग्निः) इत्याख्य बहुसंख्याकः। यत्र कुत्रापि जरठोष्ट्रीयाणां दश कुलानि स्युस्तत्र अवश्यम् अयम् अग्निः स्यात्। अयं चातुर्वर्ण्योऽग्निरिति समाख्यामर्हति, यतः पुरोहितानां योद्धॄणां कृषिकराणां कारूणां च गृहेभ्यः अग्नीन् आहृत्य अयं सम्पाद्यते। वेदे अग्नेराधानं न केवलं त्रैवर्णिकानां कृते विहितम्। रथकारस्यापि अग्न्याधानविधिः श्रूयते।

**आतिष् आदरान्** इत्याख्यस्याग्नेः संस्कारः प्रायेण **आतिष् बह्राम्** इत्याख्यस्याग्नेरिव भवति, परन्तु त्रिरेव न बहुकृत्वः। तदर्थं संगृहीताश्चत्वारोऽग्नयः पृथगभिमन्त्र्यन्ते। तदनन्तरं तेषां मेलनं भवति। सम्मिलितेऽग्नौ चन्दनकाष्ठधूपैराहुतयो भवन्ति। तदन्ते च अग्निप्रणयनं भवति स्वागारे च स्थापनम्।

**आतिष् दाद्गाह्** इत्याख्यस्य तृतीयविधस्याग्नेः स्थापनस्य प्रक्रिया अतिसरला एव। अयं गृहस्थस्यैवाग्निरत आवसथ्याग्निरिति व्यपदेशमर्हति। अस्य स्थापनाय अग्न्यगारस्य संस्काराभिमन्त्रणादिकं क्रियते नाग्नेः। प्रथमम् अगारं मार्ज्यते जलेन च प्रक्षाल्यते। ततो दिनचतुष्टयपर्यन्तं नानायज्ञसम्पादनात् परं तस्मिन्नगारे अयमग्निः स्थाप्यते।

अत्रास्ति किञ्चिदवधेयम्। जनाः प्रायेण जरठोष्ट्रीयान् 'अग्निपूजका' इत्याख्यया व्यपदिशन्ति। परन्तु न हि ते तत्त्वेन अग्नेरुपासकाः। ते हि परमेश्वरस्य पूजकाः, अग्निसपर्याद्वारा तमेव परमेश्वरमाराधयन्ति। अग्निर्ज्योतीरूपः, परमेश्वरोऽपि ज्योतिषां ज्योतिः। मुण्डकोपनिषदि एवमुक्तं "तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः (२/२/९)"। इत्थम् अपां मित्रस्य सूर्यस्य चन्द्रमसोऽन्येषां च यजतानां पूजा अवगन्तव्या। सर्वे ते जरठोष्ट्रीयैरहुरमज़्दाख्यस्य परमेश्वरस्य प्रकाशरूपा मन्यन्ते, यथा शिवस्य एकस्य अष्टौ मूर्तयः। वेदेऽपि सदाख्यस्य एकस्य ब्रह्मण एव भिन्ना व्यपदेशाः सन्तीत्युक्तिः, "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥ (ऋ. सं. १/१६४/४६)" इति अवसितमग्न्याधानवर्णनम्।

अधुना यज्ञानधिकृत्य वच्मि। ते तु द्विविधाः, आभ्यन्तरा बाह्याश्च। त एव आभ्यन्तरा यज्ञा ये विशिष्टे स्थाने क्रियन्ते। तद् विशिष्टस्थानं प्रायेण अग्न्यगारसंलग्नम्। अग्न्यगारेषु "दर्-इ-मेहेर्" (मित्रस्य द्वारम्) इत्याख्यं स्थानमस्ति यत्रैते यज्ञा उपादीयन्ते। अस्मन्मन्दिरेष्वपि प्रायेण एतादृशं स्थानमस्ति यत्रोपविष्टा जना विशिष्टजपपाठादिकं कुर्वन्ति, यत्र वा धर्मविषयमधिकृत्य नाट्याभिनयाः पुराणेतिहासकथा वा प्रवर्तन्ते देवतानामसंकीर्तनं वा क्रियते। बाह्या यज्ञास्ते सन्ति ये अग्न्यगाराद् अन्यत्रापि क्रियेरन्।

आभ्यन्तरा यज्ञास्त्रयः, यस्न-विस्परद्-वेन्दिदाद्- संज्ञकाः। एतेषु आवित्तस्य यस्नादीनां त्रयाणां ग्रन्थानां यज्ञप्रसङ्गेन पाठो भवति।

यस्न-यागे प्राक् पर-यस्नाख्यानि षट् कर्माणि क्रियन्ते। तान्यंशतो वैदिकयज्ञेषु प्रयाजानुरूपाणि सन्ति। पर-यस्न- कर्माण्येतानि—

(१) **बर्सम्**

(२) **अइ्भ्या ओड्ह्नें म्**

(३) **उर्वराम्**

(४) **ज़ओथ्र**

(५) **जिवाम्**

(६) **हओम** च।

देवतोद्देशेन द्रव्यत्यागो हि. यागः। एतदनुसारेण पर-यस्नेषु केवलं **हओम** यागरूपः शिष्टानि यागप्रसङ्गेन आवश्यकानि उपकरणानि।

**बर्सम्** इति शब्दस्य आवित्ते **बरेॅस्मन्** इति रूपं दृश्यते। अस्य संस्कृतप्रतिरूपं शिखरार्थकं **वर्ष्मन्** इति, न हि **बर्हिष्** इति, यथा कैश्चिन्मन्यते। **बर्हिष** आवित्तप्रतिरूपं **बरेॅज़िष्** इति। कस्मादप्युन्नताद् वृक्षात् त्रयोविंशतिः शाखा यस्नार्थं समन्त्रकं संगृह्यन्ते ताभ्यश्च एकविंशतिर्बरेॅस्मन् कर्मार्थं खर्जूरवृक्षात् समन्त्रकं कृत्तेन पत्रेण बध्यन्ते, यथा वैदिकेषु इष्ट्यादियागेषु समिध इध्मसन्नहनाख्यैः कुशैर्बध्यन्ते। अस्य आवित्तिक-समाख्या **अइ्भ्याओड्ह्नेॅम्** इति यस्य संस्कृत-प्रतिरूपम् **अभ्यसनम्** इति। वैदिक-इष्टियागे पशुयागे च प्रथमप्रयाजस्य देवता **समिधः**। कदाचिद् ईराणीय-वर्ष्म-प्रयाजे पुरा समिध एव उपादीयन्त। आवित्ते वृक्षशाखाः श्रूयन्ते। वैदिकयागे स्मार्तकर्मसु च समिधः काष्ठमयान्येव भवन्ति। अधुना भारत-वर्षीयैर्जरठोष्ट्रीयैर्वृक्षशाखास्थाने वर्ष्मार्थं धातवतन्तव एवोपयुज्यन्ते। एतत्कारणं तु नावगम्यते।

**उर्वराम्** इत्यस्य संस्कृत-प्रतिरूपम् **उर्वरा** इति, यस्य वैदिकार्थ **उद्भिद्** यथा ऋक्-संहितायाम् "इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय।

शिरस्ततस्योर्वराम् आदिदं म उपोदरे ॥ (८/८९/५)" परन्तु जरठोष्ट्रीयसाहित्य उद्भित्सामान्यरूपं यौगिकमर्थं परित्यज्य दाडिम्ब-वृक्षार्थे शब्दोऽयं रूढ:। अभ्यसनवद् दाडिम्बशाखा मन्त्रोच्चारणेन सह छिद्यते **हओम्** - यागे च उपयुज्यते। वैदिकेषु पाशुकप्रयाजेषु **वनस्पतिरेका** देवता॥

**ज़ओथ्र-** शब्दस्य संस्कृते अक्षरशोऽनुवादो **हौत्रम्** इति स्यात्। परन्तु संस्कारपूतं जलमेवास्यार्थ:। वैदिकइष्टियागे तज्जलं गार्हपत्याद् उत्तरस्यां दिशि स्वासन उपविष्टोऽध्वर्युराहवनीयाद् उत्तरत: प्रणयनार्थम् अनुज्ञायै ब्रह्माणं प्रार्थयते। तेनानुज्ञात: स तज्जलमाहवनीयाद् उत्तरत: स्थापनार्थं प्रणयति। यस्मिन् पात्रे तज्जलमाधीयते तत् प्रणीतापात्रम् इति व्यपदिश्यते। प्रणीता आप एव **ज़ओथ्र**-संज्ञक:। **ज़ओथ्र-हौत्र-** शब्दयोर्हवनार्थकाद् हु-धातोर्निष्पत्तिर्नहि आह्वानार्थकाद् ह्वे- धातोरिति केषाञ्चिद् विदुषां मतम्। आहवनीय एवाग्नौ प्राधान्येन यागा: क्रियन्ते।

**जिवाम्** इति **गाँम् जिव्याम्** इत्यस्य संक्षिप्तं रूपम्। अतोऽस्यार्थो गोपयं इति स्यात्। परन्तु छाग्या एव पय एतदर्थमुपादीयते, न गो:। **अषेॅम्-वोॅहू-** मन्त्रोच्चारणेन सह छागी दुह्यते। कदाचित् पुरा गोश्छाग्याश्च पय उपादीयत, यथा वैदिके प्रवर्ग्ये क्रियते। एतज् **जिवाम्** नाना प्रकारैरुपयुज्यते। एक उपयोगो **वर्ष्म**-प्रोक्षणे। उलूखले **हओम्**-पेषणं भवतीत्यग्रतो वक्ष्यते। उलूखले **हओम्**-स्थापन-समये किञ्चिज् **जिवामपि** तत्र निनीयते।

अधुना **हओम्-** याग: प्रस्तूयते। **हओम्-** शब्दस्य वैदिकं प्रतिरूपं **सोम** इति। सोमयागस्तु प्रसिद्ध एव। वैदिकेषु यागेष्वयमभ्यर्हिततम इष्ट्यादिबहुयाग-समष्टिरूपश्च। प्रधानयाग एवायं नाङ्गयाग: प्रयाजो वा। सोमयाग इव **हओम्**-यागे **हओम्** एव द्रव्यम्। सोमो व्रतति-रूप आसीत्। **हओम्**-रूपं द्रव्यम् ईराण-देशे भारतवर्षे च वृक्षविशेषस्य शाखा। कालेन

सोमस्य दौर्लभ्याद् भारतवर्षे सोमस्य स्थाने पूतिकाया विधानं श्रूयते। इदानीं वैदिकसोमयागे पूतिकाया एव उपयोगः क्रियते। सोमलतायाः स्थाने यजमानभेदेन द्रव्यान्तरस्य प्रयोगो दृश्यते। ऐतरेयब्राह्मणे (७/४) क्षत्रिययजमानकृते न्यग्रोधावरोधानाम् औदुम्बराश्वत्थप्लक्षवृक्षाणां फलानां वा पेषणं कृत्वा तद्रसो यजमानाय भक्षत्वेन देय इति विहितम्। कात्यायनश्रौतसूत्रानुसारेण (१०/९/२८) वैश्यराजन्ययोर्भक्षो न्यग्रोधस्तिभिनी रूपः। न्यग्रोधस्तिभिन्यो न्यग्रोधावरोधास्तस्माद् वृक्षाल्लम्बमानास्तन्तवः। कदाचिद् वास्तवसोमालाभकारणाज् जरठोष्ट्रीयैर्वृक्षविशेषस्य शाखा हओमँ-त्वेन उपयुक्ता।

**हओमँ-** यागश्चतुर्धाविभक्तः (१) प्रारम्भिकाणि कार्याणि, (२) हओमँ-संस्कारः, (३) हओमाँभिषवः, (४) हओमँपानं च।

वर्ष्मादीन्यावश्यकान्युपकरणानि प्रथमं सज्जीक्रियन्ते। तानि पाषाणमयेषूच्चासनेषु निधीयन्ते। एवं वैदिकसोम-यागेऽपि सोमलता राजासन्द्यां निधीयते प्रवर्ग्यपात्रं च सम्राडासन्द्याम्। हओम-यागः प्राता रात्रौ वा क्रियते। ज्योतिष्टोमसोमयागस्य सप्तसु संस्थासु अतिरात्र-संस्था विहाय अन्या दिवा एव सम्पाद्यन्ते। केवलं सुत्यादिवसीयाः प्रातरनुवाकाः सूर्योदयात् प्राग् अनूच्यन्ते। **हओमँ-** यागे प्रथमं यागसमयानुसारेण स्तुतिः क्रियते। आस्माकेषु कृत्येषु सङ्कल्पवाचनावसरे कालसंकीर्तनं भवति। विशिष्ट-मन्त्रोच्चारणपुरःसरं हओमँस्य पूतजलेन संस्कारः क्रियते। वैदिकसोमयागेऽपि वसतीवर्या एकधनायाश्च मेलनेन पूतभृत्संज्ञकं यज्जलं सम्पाद्यते तेन जलेन अभिषवात् पूर्व सोमलतायाः सेचनं क्रियते।

उलूखले **हओमो** दाडिम्वशाखया सह निधीयते। मुसलेन उलूखलस्य चतसृषु दिक्षु अभिघातः क्रियते। उत्तरस्यां दिश्यभिघातवेलायां **दएँव-ध्रा** मन्त्रा उच्चार्यन्ते। एवं वैदिके दर्शपूर्णमासयागे अध्वर्युः कृष्णाजिनमादाय

"अवधूतः रक्षोऽवधूता अरातयः" (माध्यन्दिनसंहिता १/१४) इति मन्त्रेण अवधूनोति, आग्नीध्रश्च "कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद, त्वया वयः संघातः संघातंजेष्म" (मा. सं. १/१६) इति मन्त्रेण शम्यया दृषदम् उपलां च समाहन्ति। उलूखलस्थे हओमॅ- दाडिम्बशाखे बहुमन्त्रपाठेन सह मुसलेन पिष्येते। वैदिके सोमयागे हविर्धानमण्डपे उपरवाख्यविलचतुष्टयोपरि दारुमये अधिषवणफलके निधाय तदुपरि च चर्म आस्तीर्य सोमलताया ग्राव्णा अभिषवः क्रियते। परन्तु ऋक्संहितातो ("यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे। उलूखलसुतानामवेद्विन्द्र जल्गुलः॥ १/२८/१) ज्ञायते प्राचीनतरकाले पाषाणमय उलूखले सोमाभिषवोऽक्रियत। हओमॅ- दाडिम्बयो रसस्य पवनम् (ऋजीषात् पृथक्करणम्) अग्न्यगारे रक्षितस्य पूतस्य वृषभस्य रोम्णा वेष्टितेन अङ्गुरीयकेण क्रियते। तदा हुमत- हूख़्त-ह्वर्स्त- शब्दानाम् उच्चारणं भवति। वैदिके सोमयागे मेषलोमनिर्मितवस्त्रेण एतत् पवनं साध्यते। तदा च पवमानसूक्तानि शस्यन्ते। तेषु सूक्तेषु एतौ मन्त्रौ उद्धरणमर्हतः—

"स्वादिष्ठया मदिष्ठया पवस्व सोम धारया।

इन्द्राय पातवे सुतः॥" (ऋ. सं. ९/१/१)

"ऋतं वदन्नृतद्युम्न सत्यं वदन्त्सत्यकर्मन्।

श्रद्धां वदन्त्सोम राजन् धात्रा सोम परिष्कृत,

इन्द्रायेन्दो परि स्रव॥" (ऋ. सं. ९/११३/१)

ज़ओताख्य ऋत्विक् (सं. होता) हओमॅस्य स्तुतिं करोति तदनन्तरं चापर आत्रवक्ष्याख्य ऋत्विग् हओमॅ- पात्रम् अग्निं परितो नीत्वा तज् ज़ओताख्याय ऋत्विजे ददाति, स च तद्रसं पिबति। हओमॅ-रसोऽग्नौ न प्रक्षिप्यते। अग्नौ कस्यापि द्रवद्रव्यस्य प्रक्षेपो ज़रठोष्ट्रीयसिद्धान्तविरुद्धः। आस्माके सोमयागे सोमरस महावेदिस्थ आहवनीयाग्नौ हूयते, तच्छेषश्च सर्वैर्ऋत्विग्भिर्यजमानेन च उपाह्वानपूर्वकं पीयते।

जरठोष्ट्रीये **हओम-** यागे सवनद्वयं भवति। द्वितीये सवने **हओम-रस**: समवेतैः सर्वैर्जनैः पीयते। वैदिके सोमयागे प्रातर्माध्यन्दिन- सायं-सवनाख्यानि त्रीणि सवनानि सन्ति। अतिरात्र-यागेषु रात्रावपि सवनत्रयं भवति। इत्यवसितं **हओम**-याग-वर्णनम्।

प्रागेव मयोक्तम् अयं यागो **यस्न**यागस्याङ्गभूतः। अधुना स **यस्न**यागोऽतिसंक्षेपेण वर्ण्यते। प्राधान्येन अयम् आवित्तीययस्नग्रन्थस्य द्विसप्ततिसंख्याकानां सर्वेषां **हाख्य**-परिच्छेदानां पाठरूपः। अस्माकं वेदपारायणेन सदृशोऽयम्। यस्य जीवत उपरतस्य वा पुरुषस्य कृते **यस्न**-यागः प्रवर्तते तस्य नाम ऋत्विग्भ्याम् आदौ उच्चार्यते। एवम् आस्माककर्मसु सङ्कल्पवाक्ये यजमानस्य गोत्रेण सह नाम गृह्यते। **यस्न**-यागे प्रथमं प्रथमद्वितीयपरिच्छेदयोः पाठः क्रियते। तेन पाठेन परमेश्वरस्य तत्सहचारिणाम् अन्येषां च यजतानां स्तुतिर्भवति। **परग्ना**- (प्रयाज-) कर्मावसरे **दारन्**- इत्याख्यातः पुरोडाशः कृतः। तृतीयम् आरभ्य सप्तमपरिच्छेदपर्यन्तं यस्नस्य पाठकाले तस्य पुरोडाशस्य संस्कारः क्रियते। अष्टमपरिच्छेदपाठवेलायां तस्योत्सर्गो भवति। तदनन्तरं **ज़ओता** पुरोडाशस्यैकमंशं भक्षयति अन्यांश्च भागान् समवेताः सर्वे जनाः। आस्माक इष्टियागे होत्रा इळाया उपाह्वाने कृते सर्वे ऋत्विजः स्वं स्वं भागं भक्षयन्ति, यजमानश्च व्रतविसर्गानन्तरं स्वकीयं भागं खादति।

तदनन्तरं नवमादियस्नपरिच्छेदानां पाठः प्रवर्तते। द्वाविंशपरिच्छेदस्य पाठो यदा क्रियते द्वितीयसवनानुकल्पः **पर-हओम**- यागः संसाध्यते। अन्तिमपरिच्छेदस्य पाठानन्तरं ऋत्विजौ **कुस्त्या**ख्यमेखलायाः पुनःसन्निवेशं कुरुतः। अनन्तरं च तावग्न्यगारीयं कूपं प्रति गच्छतः तस्मिंश्च **ज़ओथ्र**-समाख्यं संस्कृतं जलं पातयतः। एवम् वैदिक इष्टियागे प्रणीतापात्रीयं जलम् अध्वर्युः यागसमाप्तौ वेद्यां निनयति।

**यस्न-** पाठः प्राधान्येन **ज़ओताख्येन** ऋत्विजा क्रियते। तत्सहकारी अन्तरान्तरा तेन सह पाठे समवेतो भवति। तस्य सहकारिण ऋत्विजो मुख्यं कार्यम् अग्नौ समिधां धूपानां च प्रक्षेपः। वैदिकयागेषु अग्नीध् स्फ्याख्यं खड्गम् आदाय अग्निरक्षां करोति। परन्तु **अग्नीद्-** इति समाख्यातोऽग्निसमिन्धनमेव तत्कार्यत्वेन प्राप्तम्।

एवं **विस्पे रेंद्-** यागो **वेन्दिदाद्-** यागश्च पाठद्वारा संसाध्येते।

**बाह्ययागाश्च आफ्रिङ्गानादयः** सन्ति। **अफ्रिङ्गान्-** (सं. आप्रिय-) कर्मणि सुरा-दुग्ध-पुरोडाश-फल-मयं नैवेद्यम् उपरतस्य कस्यापि पुरुषस्य तृप्तये पुरोहितेन अभिमन्त्र्यते। अनन्तरं समवेताः सर्वे तत् प्रसादरूपेण भक्षयन्ति। अस्त्येकं कर्म **बाजाख्यं** यदन्येषु यागेषु समाविष्टमस्ति पृथक् च क्रियते। एतदुपांशुयागरूपम्।

इत्यवसितं जरठोष्ट्रीयकर्मकाण्डवर्णनम्।

**समाप्तश्च उपोद्घातः ॥**

# आवेस्तीया भाषा

साम्प्रतमावित्तस्य भाषायाः सम्बन्धे किञ्चिद् वक्तव्यम्। सा वेद-भाषानुगतेत्यसकृत् पाश्चात्यविद्वद्भिरुक्तम्। परन्तु तस्मिन् सादृश्ये सत्यपि वैदृश्यमपि दृश्यते। उभे अत्र प्रदर्श्येते।

बह्वीनां भाषाणां तुलनया विद्वद्भिरेतन्निश्चितं यदासीत् पुरा कापि भाषा यतः संस्कृतादिभाषा, ईराणीयाः काश्चन भाषाः, अर्मनीयभाषा, ग्रीकभाषा, रोमीयभाषाः, शर्मण्यभाषाः, केल्तिकभाषा, अल्बेनियभाषा, रूसीयादिस्लावभाषा, लिट्वादि-बाल्टिकभाषा, अचिरं ज्ञाता तुषारभाषा च, केषाञ्चन मतेन खत्तिभाषा च प्रादुर्भूताः। तस्या मूलभाषायाः कृते इन्दो-योरोपीय-भाषा, इन्दो-शर्मण्य-भाषेति वा संज्ञा विद्वत्सु प्रचलिता। कैश्चिच्च भारतीयैर्विद्वद्भिर्भारोपीयभाषात्वेन व्यपदेशः कृतः। तासां भाषाणां मध्ये परस्परसादृश्यबाहुल्यात् संस्कृतमूला भारतीयभाषा अवेस्तादयः काश्चन ईराणीयभाषा अर्मनीयभाषा च आर्यभाषासंज्ञया व्यपदिष्टाः।

ईराणीयभाषासु आर्यवर्गान्तर्गतासु प्राचीनास्तिस्रो भाषा विभाषा वा समागताः—(1) अवेस्तामध्ये दृष्टा गाथा-भाषा (2) यवीयस अवेस्ताग्रन्थस्य भाषा, (3) हखामनीषीयाणां राज्ञां शिलालेखादिषु प्रयुक्ता प्राचीना पारसीभाषा च। उत्तरकाले पह्लवीभाषा आभ्य एव विनिर्गता। तदुत्तरं च पारसीभाषा या फ़िर्दौस्याख्यस्य महाकवेः शाहनामेत्याख्ये महाकाव्ये दृश्यते। ततश्च वर्तमानफ़ार्सीभाषाया उत्पत्तिः। एतद् व्यतिरेकेण पश्तोभाषा, बलोचभाषा इत्यादयः कति आधुनिक्यो विभाषा अपि एतद्वर्गान्तर्गताः।

अवेस्ताग्रन्थः अरमाइकलिपितः प्रादुर्भूतायां कस्याञ्चित् विशिष्टायां लिप्यां प्राग् लिखित इति आन्द्रेआस्-महाशयस्यानुमानम्। अधुना अवेस्ताग्रन्थः

सासानीयकाले संगृहीतः, अतः स तत्कालप्रचलितपह्लवीलिप्यां किञ्चित् परिवर्तनेन लिखितः। प्राचीन- पारसीकभाषा शिलीमुखलिप्यां लिखिता। पह्लवी-भाषा स्वकीयलिप्यां निबद्धा। पारस्यादिभाषा अरबलिपिग्रथिताः। अवेस्तालिपेः शामिलिपिप्रभावितदेशे लिखितत्वाद् वर्णानां विन्यासो दक्षिणतो वामं प्रति प्रसरति। सा तु लिपिरेतादृशी अस्ति—

## स्वराः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | आ | इ़ | ई | उ | ऊ | एॅ | एॅ |
| ए | ए़ | ओ | ओ | औओ | ऑ | | |

## व्यञ्जनानि

| | | | | | | |
|---|---|---|---|---|---|---|
| कण्ठ्याः– | क | ख़ | ग | ग़ | | |
| तालव्यौः– | च | ज | | | | |
| दन्त्याः– | त | थ़ | द | द़ | त़ | |
| ओष्ठ्याः– | प | फ़ | ब | भ़ | | |
| अनुनासिकाः– | ङ | ञ | न | ऩ | म | |
| अन्तस्थाः– | य | र | व | | | |
| ऊष्माणः (सकारादयः) | स | श | ष | ष़ | ज़ | झ़ |
| ऊष्मसु हकारादयः– | ह | ह़ | ह्व | | | |

एषु वर्णेषु आद्य-स्वरो विवृत एव। कदाचित् वेदभाषायामपि अस्य वर्णस्य विवृतोच्चारणमासीत्। ऋकारस्योच्चारणमस्यां भाषायाम् एॅर्एॅ इत्यासीत्। ऋक्प्रातिशाख्यतस्तदेवोच्चारणमृग्वेद इति ज्ञायते। ख़, ग़, थ़, द़, फ़, भ़, ज़, झ़, ह़, ह्व इत्येतेषु व्यञ्जनेषु संवारश्रुतिर्विद्यते। ऩकारश्रुतिर्नकारतः किञ्चिद् भिन्ना। एवं षकारश्रुतिः षकारात् किञ्चिद् भिन्ना। इदमत्रावधेयम् अस्यां भाषायां टवर्गो नास्ति, न च लकारो लृकारो वा। स्वराः पृथग् लिख्यन्ते। भारतीयभाषासु व्यञ्जनोत्तरमागतोऽकारो लेखने न निर्दिश्यते एवमत्रापि न क्रियते। 'एॅ एॅं' वर्णौ ह्रस्वदीर्घौ संवृतौ वर्णावास्ताम्।

## वर्णतुलना

संस्कृतवर्णानाम् आवेस्तीयवर्णैस्तुलना क्रियते ।

### स्वराः

| | | |
|---|---|---|
| **सं. *अ*** | = | **आ. *अ*** |
| अस्ति | = | अस्ति |
| मातरः | = | मातरो |
| **सं. *अ*** | = | **आ. *ऍ*** |
| सन्तम् | = | हॆंन्तॆंम् |
| शविष्ठः | = | सॆंविष्तो |
| **सं. *अ*** | = | **आ. *ऍ*** |
| अहम् | = | अज़ॆंम् |
| **सं. *अ*** | = | **आ. *आ*** |
| यतरः | = | यतारो [वेदेऽपि *'विश्वाह'*, *'विश्वहा'* इति रूपद्वयं दृश्यते] |
| आथर्वा | = | आथ्रव |
| **सं. *आ*** | = | **आ. *आ*** |
| मातरः | = | मातरो |
| **सं. *आ*** | = | **आ. *अ*** |
| नाना | = | नना |
| यावता | = | यवत |

| | | |
|---|---|---|
| सं. इ | = | आ. इ |
| अस्ति | = | अस्ति |
| चित्तिः | = | चिस्तिष् |
| सं. इ | = | आ. ई |
| विश्वम् | = | वीस्पॅम् |
| सं. ई | = | आ. ई |
| जीव्याम् | = | जीव्याँम् |
| सं. ई | = | आ. इ |
| अनीकम् | = | अइनिकॅम् |
| सं. उ | = | आ. उ |
| उत | = | उत |
| दारु | = | दाउरु |
| सं. उ | = | आ. ऊ |
| स्तुतः | = | स्तूतो |
| स्तुहि | = | स्तूइद्रि |
| सं. ऊ | = | आ. ऊ |
| भूमिम् | = | बूमिम् |
| भूरेः | = | बूरोइष् |
| सं. ऊ | = | आ. उ |
| सूनवः | = | हुनवो |

| | | |
|---|---|---|
| तनूनाम् | = | तनुनाँम् |
| सं. ए | = | आ. ए |
| यजते | = | यज़इते |
| सं. ए | = | आ. *अए* |
| देवः | = | दएवो |
| सं. ए | = | आ. *ऑइ* |
| वेत्थ | = | वॉइस्ता |
| के | = | कॉइ |
| सं. *अः* | = | आ. *ओ* |
| श्रीलः | = | सिरिरो |
| सं. *ओ* | = | आ. *अओ* |
| सोमः | = | हओमो |
| सं. *ओ* | = | गा.आ. *ऍउ* |
| गोः | = | गेँउष् |
| सं. *ऐ* | = | आ. *आइ* |
| मन्त्रैः | = | माँथ्राइष् |
| सं. *औ* | = | आ. *आउ* |
| गौः | = | गाउष् |
| सं. *ऋ* | = | आ. *ऍरॅ* |
| मृत्युः | = | मॅरॅथ्युष् |

| | | |
|---|---|---|
| सं. *आ* | = | आ. *ओ* |
| गाथाश्च | = | गाथ़ाओस्च |
| सं. *आ* | = | आ. *आँ* |
| मर्त्यानाम् | = | मष्यानाँम् |

## व्यञ्जनानि

| | | |
|---|---|---|
| सं. *क* | = | आ. *क* |
| कतरः | = | कतारो |
| सं. *क* | = | आ. *ख़* |
| क्रतुः | = | ख़्रतुष् |
| सं. *च* | = | आ. *च* |
| चरति | = | चरइति |
| सं. *च* | = | आ. *स* |
| याचस्व | = | यासङ्उह |
| सं. *छ* | = | आ. *स* |
| इच्छति | = | इसइति |
| सं. *त* | = | आ. *त* |
| प्रति | = | पइति |
| सं. *त* | = | आ. *थ* |
| क्षत्रम् | = | ख़्सथ्रेंम् |

| | | |
|---|---|---|
| **सं. *प*** | = | **आ. *प*** |
| पतन्ति | = | पतें॑न्ति |
| **सं. *प*** | = | **आ. *फ़*** |
| प्र | = | फ्रा (गा. फ्रॅरा) |

[संस्कृतस्य क-त-प-वर्णानाम् आवेस्ताभाषायां ख़, थ़, फ़ इति विपरिणामो रकारसंयोग एव भवतीति अवधारणीयम्।]

| | | |
|---|---|---|
| **सं. *ख*** | = | **आ. *ख़*** |
| खरम् | = | ख़रें॑म् |
| **सं. *थ*** | = | **आ. *थ़*** |
| गाथाः | = | गार्थाओ |
| **सं. फ** | = | **आ. फ़** |
| कफम् | = | आ. कफ़ें॑म् |
| **सं. *ग*** | = | **आ. *ग*** |
| उग्रान् | = | आ. उग्रें॑न् |
| **सं. *ग*** | = | **आ. *ग़*** |
| उग्रम् | = | उग़ें॑म् |
| भगम् | = | बग़ें॑म् |
| **सं. *ज*** | = | **आ. *ज*** |
| जीवन्तम् | = | ज्वन्तें॑म् |
| ओजिष्ठः | = | अओजिष्तो |

| | | |
|---|---|---|
| सं. *ज* | = | आ. *झ* |
| भजत् | = | वझत् |
| सं. *ज* | = | आ. *स* |
| यज्ञः | = | यस्नो |
| सं. द | = | आ. द |
| यदा | = | यदा |
| सं. *ब* | = | आ. *ब* |
| ऋष्टि-बृहत् | = | आष्ट्यों-बरॆंज़ |
| सं. *ब्र* | = | आ. *म्र* |
| ब्रू | = | म्रू |
| सं. *घ* | = | आ. *ग़* |
| घोषम् | = | ग़ओषॆंम् |
| सं. *ध* | = | आ. द |
| धारयत् | = | दारयत् |
| सं. *भ* | = | आ. *ब* |
| भूमिम् | = | बूमिम् |
| सं. द | = | आ. *द्र* |
| विद्वान् | = | वीद्र्वाँओ |
| सं. *घ* | = | आ. *ग़* |
| दीर्घम् | = | दरेंग़ॆंम् |

| | | |
|---|---|---|
| सं. ध | = | आ. द्र |
| अध | = | अद्र |
| सं. थ | = | आ. थ्र |
| गर्भम् | = | ·रेँभ्रेँम् |
| सं. ङ | = | आ. ङ |
| पाङ्क्तम् | = | पाङ्तङ्हेँम् |
| सं. ञ | = | आ. ञ |
| पञ्च | = | पञ्च |
| सं. न | = | आ. न |
| नाम | = | नाम |
| अन्यः | = | अन्यो |
| सं. न | = | आ. न्न |
| श्रावयन्तम् | = | स्रावयन्न्तेँम् |
| सं. म | = | आ. म |
| माम् | = | आ. माम् |
| सं. य | = | आ. य |
| ये | = | योइ |
| यज्ञ | = | यस्न |
| सं. र | = | आ. र |
| रथम् | = | रथ्रेँम् |

| | | |
|---|---|---|
| नरम् | = | नरें॒म् |
| **सं. *ल*** | = | **आ. *र*** |
| श्रीलः | = | सिरिरो |
| **सं. *व*** | = | **आ. *व*** |
| वातः | = | वातो |
| वस्त्रम् | = | वस्त्रें॒म् |
| **सं. *श*** | = | **आ. *स*** |
| शतम् | = | सतें॒म् |
| श्रुतः | = | स्रूतो |
| **सं. *स*** | = | **आ. *ह*** |
| सोमः | = | हओमो |
| असुरः | = | अहुरो |
| अस्मै | = | अह्माइ |
| **सं. *स*** | = | **आ. *स*** |
| स्कन्नम् | = | स्कॅन्दें॒म् |
| **सं. *स*** | = | ***आ. ष*** |
| आशीः | = | (= आशीस्) = अषिष् |
| **सं. *अस्*** | = | **आ. *अङ्ह*** |
| नमसा | = | नम[illegible] |
| वसुः | = | वङ्हुष् |

| | | |
|---|---|---|
| अवसे | = | अवङ्हे, (गा.) अवङ्हे |
| सं. *ष* | = | आ. *ष* |
| द्वेषस्तूर्यो | = | त्वएँषो-तउर्वाओ |
| सं. *ष* | = | आ. *ख्श* |
| षट् | = | ख्श़ष् |
| सं. *अस्* | = | आ. *ओ* |
| सोमः (=सोमस्) | = | हओमो |
| पुत्रः (= पुत्रस्) | = | पुथ्रो |
| सं. *आस्* | = | आ. *आह्* |
| भवासि | = | बवाहि |
| रासि | = | राही |
| सं. *आस्* | = | आ. *अँओङ्ह* |
| आस | = | अँओङ्ह |
| सं. *आस्* | = | आ. *आओ* |
| भूयाः | = | बुयाँओ |
| सं. *अंस्* | = | आ. *अङ्ह* |
| शंसानि | = | सङ्हानि |
| सं. *अंस्* | = | आ. *ऍङ्ह* |
| वंसन् | = | बॅङ्हॅम् |
| सं. *अंस्* | = | गा. आ. *ऐँङ्घ* |
| शंसानि | = | सेँङ्घानि |
| वंसन् | =. | वेँङ्घेँन् |

सं. अंस् = गा. आ. ऐँह

मन्महि (= मंस्महि) = मेँह्मइ

सं. स्व = आ. ह्व

स्वर् = ह्वरेँ

सं. स्व = आ. ङ्ह्व

ओजस्वान् = ओजस्वान्त् > अओजोङ्ह्वन्त्

सं. स्व = आ. ङ्उह

याचस्व = यासङ्उह

सं. स्य = आ. ह्य

स्यात् = ह्यात्

सं. स्य = आ. ख़्य

दस्यूनाम् = दख़्युनाँम्

अस्य च = अख़्या चा

सं. स्र = आ. ङ्र

सहस्रम् = हज़ङ्रेँम्

अस्रो मन्युः = अङ्रो मइन्युष्

सं. श्व = आ. स्प

अश्वः = अस्पो

सं. ह = आ. ज़

हस्त = ज़स्त

अहम् = अज़ेँम

## शब्दरूपाणि

यथा संस्कृते तथात्रापि अजन्त-हलन्त-भेदेन शब्दा द्विधा त्रिषु लिङ्गेषु भवन्ति। तेषां च रूपाणि त्रिषु वचनेषु सर्वासु च विभक्तिषु दृश्यन्ते। अत्र केषाञ्चित् शब्दानां रूपाणि प्रदर्श्यन्ते।

*पुं. लि. अकारान्तः*

**यस्न = सं. यज्ञ**

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. | यस्नो (यज्ञः) | यस्ना (यज्ञा, यज्ञौ) | यस्ना, यस्नाङ्हो (यज्ञाः, यज्ञासः) |
| द्वि. | यस्नेॅम् (यज्ञम्) | " " | यस्नाँ (यज्ञान्) |
| तृ. | यस्ना (यज्ञा, यज्ञेन) | यस्नएइब्य (यज्ञाभ्याम्) | यस्नाइष् (यज्ञैः) |
| च. | यस्नाइ (यज्ञाय) | " " | यस्नएइब्यो (यज्ञेभ्यः) |
| प. | यस्नात् (यज्ञात्) | " " | " " |
| ष. | यस्नह्या (यज्ञस्य) (गा. आ.) यस्नहे (य. आ.) | यस्नयाओ (यज्ञयोः) | यस्नानाँम् (यज्ञानाम्) |
| स. | येस्ने (यज्ञे) | यस्नयो (यज्ञयोः) | यस्नएषु (यज्ञेषु) |
| सम्बो. | यस्न (यज्ञ) | यस्ना (यज्ञा, यज्ञौ) | यस्ना, यस्नाङ्हो (यज्ञाः, यज्ञासः) |

*स्त्रीलि. आकारान्तः*

**दएना = धेना**

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. | दएना (धेना) | दएने (धेने) | दएनाओ (धेनाः) |
| द्वि. | दएनाँम् (धेनाम्) | " " | " " |
| तृ. | दएनय (धेनया) | दएनाब्य (धेनाभ्याम्) | दएनाबिष् (धेनाभिः) |
| च. | दएनयाइ (धेनायै) | " " | दएनाब्यो (धेनाभ्यः) |
| प. | दएनयात् (धेनायाः) | " " | " " |
| ष. | दएनाया (धेनायाः) | दएनयाओ (धेनयोः) | दएननँम् (धेनानाम्) |
| स. | दएनय (धेनायाम्) | " " | दएनाहु (धेनासु) |
| सम्बो. | दएने (धेने) | दएने (धेने) | दएनाओ (धेनाः) |

*पुं. लि. इकारान्तः*

**गइरि- = गिरि-**

| | | | |
|---|---|---|---|
| प्र. | गइरिष् (गिरिः) | गइरि (गिरी) | गरयो (गिरयः) |
| द्वि. | गइरीम् (गिरिम्) | " " | गइरीष् (गिरीन्) |
| तृ. | गइरि (वै. गिरी, लौ. गिरिणा) | गइरिब्य (गिरिभ्याम्) | गइरिब्यो (गिरिभिः) |
| च. | गइरेंए (गिरये) | " " | " (गिरिभ्यः) |
| प. | गरोइत् (गिरेः) | " " | " " |
| ष. | गरोइष् " | × (गिर्योः) | गइरिनँम् (गिरीणाम्) |
| स. | गर (गिरौ) | × " | × (गिरीषु) |
| सम्बो. | गइरे (गिरे) | गइरि (गिरी) | × (गिरयः) |

*स्त्री लि. ईकारान्तः*

**अष़ओनी = ऋतावरा**

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. | अष़ओनि (ऋतावरी) | अष़ओनि (वै. ऋतावरी- लौ. ऋतावर्यौ) | अष़ओनीष् (वै. ऋतावरीः, लौ. ऋतावर्यः) |
| द्वि. | अष़ओनीम् (ऋतावरीम्) | " " | " (ऋतावरीः) |
| तृ. | अष़ओन्य (वै. ऋतावरी, लौ. ऋतावर्या) | अष़ओनिब्य (ऋतावरीभ्याम्) | अष़ओनिविष् (ऋतावरीभिः) |
| च. | अष़ओन्याइ (ऋतावर्यै) | " " | अष़ओनिब्यो (ऋतावरीभ्यः) |
| प. | अष़ओन्यात् (ऋतावरेः) | " " | " " |
| ष. | अष़ओर्न्याओ " | × (ऋतावर्योः) | अष़ओनिनँम् (ऋतावरीणाम्) |
| स. | अष़वनय (?) (ऋतावर्याम्) | × " | अष़ओनिषु,-ष़्व, (ऋतावरीषु) |
| सम्बो. | अष़ओनि (ऋतावरि) | अष़ओनि (ऋतावरी, ऋतावर्यौ | × (ऋतावरीः, ऋतावर्यः) |

*पुं. लि. उकारान्तः*

**मइन्यु = मन्यु**

| | | | |
|---|---|---|---|
| प्र. | मइन्युष् (मन्युः) | मइन्यू, मइन्यु (मन्यू) | मइन्यवो (मन्यवः) |
| द्वि. | मइन्यूम् (मन्युम्) | " " " | मइन्युष् (मन्यून्) |
| तृ. | मइन्यु (मन्युना) | मइन्युब्य (मन्युभ्याम्) | मइन्यबो (मन्युभिः) |
| च. | मइन्यवे (मन्यवे) | मइन्युब्य (मन्युभ्याम्) | मइन्युबो (मन्युभ्यः) |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| पं. | मइन्यओत् (मन्योः) | " " | " " |
| ष. | मइन्येंउष्, मइन्यओष् | " मइनिर्वाओ (मन्व्योः) | मइन्युमँम् (मन्यूनाम्) |
| स. | मइन्यांउ (मन्यौ) | मइनिवो (") | मइन्युषु (मन्युषु) |
| सम्बो. | मइन्यों (मन्यो) मइन्यू, मइन्यु (मन्यू) | | मइन्यवो (मन्यवः) |

*स्त्रीलि. उकारान्तः*

तनू = तनू

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. | तनुष् (तनूः) | × | तन्वा (तन्वः) |
| द्वि. | तनूम्, तन्वेंम् (तनूम्) | × | " (तनूः) |
| तृ. | तन्व (तन्वा) | × | तनुबिष् (तनूभिष्) |
| च. | तनुये (तन्वै) | × | तनुब्यो (तनूभ्यः) |
| पं. | तन्वत् (तन्वाः) | × | " " |
| ष. | तन्वो (तन्वाः) | × | तनुनँम् (तनूनाम्) |
| स. | तन्वि (तन्वाम्) | × | तनुषु (तनूषु) |

*हलन्तः*

वीस् = विश्

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. | वीष् (विट् < विश्) | वीसा (वै. विशा लौ. विशौ) | वीसो (विशः) |
| द्वि. | वीसेम् (विशम्) | " " | " " |
| तृ. | वीस (विशा) | वीझइब्य (विड्भ्याम्) | वीझइवीष् (विड्भिः) |
| च. | वीसे (विशे) | " " | वीझइब्यो (विड्भ्यः) |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| पं. | वीसत् (विशः) | " " | " " |
| ष. | वीसो " | वीसाओ (विशोः) | वीसँम् (विशाम्) |
| स. | वीसि (विशि) | " " | वीषु (विट्सु) |
| सम्बो. | वीष् (विट्) | वीसा (विशा, विशौ) | वीसो (विशः) |

*सर्वनामानि*

अज़ॅम् = अहम्

| | | | |
|---|---|---|---|
| प्र. | अज़ॅम् (अहम्) | × | वएँम् (वयम्) |
| द्वि.. | मँम्, मा (माम्, मा) | x | अह्म, नो (अस्मान्, नः) |
| तृ. | × | × | × |
| च. | मावोॅय, मे (मह्यम्, मे) | × | अह्मइब्या (गा. आ.), नो (अस्मभ्यम्, नः) |
| पं. | मत् (मत्) | × | अह्मत् (अस्मत्) |
| ष. | मन, मे (मम, मे) | × | अह्माकॅम् (अस्माकम्) |
| स. | × | × | × |

तूम् = त्वम्

| | | | |
|---|---|---|---|
| प्र. | तूम्, तू (त्वम्) | × | यूझॅम् (यूयम्) |
| द्वि. | थ़्वँम्, थ़्वा (त्वाम्, त्वा) | × | वो (वः) |
| तृ. | थ़्वा (वै. त्वा, लौ. त्वया) | × | × |
| च. | तइब्या (गा. आ.), ते (तुभ्यम्, ते) | × | यूष्मओयो, ख़्मावोय, यूष्मइब्या (गा. आ.), |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| | | | ख़्मइब्या (गा. आ.), वो (युष्मभ्यम्, वः) |
| पं. | थ्वत् (त्वत्) | × | यूष्मत्, ख़्मत् (गा. आ.) (युष्मत्) |
| ष. | तव, ते, तोंइ (गा. आ.) (तव, ते) | युवाकॅम् (युवयोः) | यूष्माकॅम्, ख़्माकॅम् (गा. आ.),वो (युष्माकम्, व |
| स. | × | × | × |

प्रथमपुरुषसर्वनाम्नः कतिपयान्येव रूपाणि प्रयुक्तानि लभ्यन्ते, एतानि तानि—

*पुं. लि.*

| | | | |
|---|---|---|---|
| प्र. | हों (सः) | ता, ताओ (तौ) | तें (ते) |
| द्वि. | तेम् (तम्) | " " " | तँ (तान्) |
| तृ. | ता (तेन) | × | ताइष् (तैः) |
| च. | × | × | तएइब्यो (तेभ्यः) |
| पं. | × | × | " " |
| ष. | तहे (तस्य) | × | × |
| स. | × | × | × |

*न. लि.*

| | | | |
|---|---|---|---|
| प्र. | तत् (तत्) | × | ता (वै. ता, लौ. तानि) |
| द्वि. | " " | × | " " |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| | | स्त्री लि. | |
| प्र. | हा (सा) | × | ताओ (ताः) |
| द्वि. | तँम् (ताम्) | × | " " |

*पुं. लि.*

अयॅम् = अयम्

| | | | |
|---|---|---|---|
| प्र. | अएँम् (अयम्) | इम (वै. इमा, लौ. इमौ) | इमे (इमे) |
| द्वि. | इमॅम् (इमम्) | " " | इमँ (इमान्) |
| तृ. | अन (अनेन) | × | अनाइष् (गा. आ.), अएँइबिश् (य. आ.) (एभिः) |
| च. | अह्माइ (अस्मै) | × | अएँइब्यो (एभ्यः) |
| पं. | अह्मात् (अस्मात्) | × | " " |
| ष. | अहे, अइङ्हे (अस्य) | अर्याओ, अनर्याओ (अनयोः) | अएँषँम् (एषाम्) |
| स. | अह्मि (अस्मिन्) | × | अएँषु, अएँष्व (एषु) |

*न. लि.*

| | | | |
|---|---|---|---|
| प्र. | इमत् (इदम्) | × | इम (वै. इमा, लौ. इमानि) |
| द्वि. | " | × | " " |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| | | *स्त्री लि.* | |
| प्र. | ईम् (इयम्, वेदे ईम्, सीम् च) | × | इर्माओ (इमाः) |
| द्वि. | इमँम् (इमाम्) | × | " " |
| तृ. | आय, अय (वै. अया, लौ. अनया) | (आभ्याम्) | आब्या (गा. आ.) आवीष् (आभिः) |
| च. | अइङ्हाइ (अस्यै) | " " | आब्यो (आभ्यः) |
| पं. | अइङ्हात् (अस्याः) | " " | " " |
| ष. | अइङ्हाओ ( " ) | × | आओङ्हँम् (आसाम्) |
| स. | अइङ्हे (अस्याम्) | × | आहू (गा. आ.) आह्व (आसु) |
| | | *पु. लि.* | |
| | | य- = यत् | |
| प्र. | यो (यः) | या (वै.या, लौ. यौ) | योइ (ये) |
| द्वि. | यिम् (यम्) | × | यँ (यान्) |
| तृ. | या (येन) | × | याइष् (यैः) |
| च. | यह्माइ (यस्मै) | × | यएइब्यो (ये भ्यः) |
| पं. | यह्मात् (यस्मात्) | × | यएइब्यो (येभ्यः) |
| ष. | येहे, येङ्हे (यस्य) | यर्याओ (ययोः) | यएषँम् (येषाम्) |
| स. | यह्मि (यस्मिन्) | × | यएषू (येषु) |
| | | *न. लि.* | |
| प्र. | यत् (यत्) | × | या (वै. या, लौ. यानि) |
| द्वि. | " " | × | " " |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| | | *स्त्री लि.* | |
| प्र. | या (या) | × | याओ (याः) |
| द्वि. | यँम् (याम्) | × | " " |
| तृ. | × | × | × |
| च. | × | × | याब्यो (याभ्यः) |
| पं. | येङ्हात् (यस्याः) | × | " " |
| ष. | येङ्हाओ " | × | याओङ्हँम् (यासाम्) |
| स. | येङ्हे (यस्याम्) | × | याहु, याह्व (यासु) |

## धातुरूपाणि

आवेस्ताग्रन्थे समुपलब्धानि धातुरूपाणि प्रायशः संस्कृत-धातुरूप-प्रक्रियामनुकुर्वन्ति। अत्र दृष्टान्तरूपेण आवेस्तायाः 'बर्' (= सं. भृ -) धातो रूपाणि दर्श्यन्ते।

बर् = भृ

*लट्*

परस्मैपदे

| | | | |
|---|---|---|---|
| प्र. पु. | बरइति (भरति) | बरतो, बरथ़ो (भरतः) | बरेंन्ति, बरइन्ति (भरन्ति) |
| म. पु. | बरहि (भरसि) | × | बरथ़ (भरथ) |
| उ. पु. | बरामि (भरामि) | × | बरामहि (वै. भरामसि, लौ. भरामः) |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| | | आत्मनेपदे | |
| प्र. पु. | बरइते (भरते) | बरोंइथ्रे (भरेते) | बरेंन्‌ते (भरन्ते) |
| म. पु. | बरहे, बरङ्‌हे (भरसे) | × | बरथ्वे (भरध्वे) |
| उ. पु. | बइरे (भरे) | × | बरामइदे (भरामहे) |

लोट्

परस्मैपदे

| | | | |
|---|---|---|---|
| प्र. पु. | बरतु (भरतु) | × | बरेंन्‌तु, बरन्‌तु (भरन्तु) |
| म. पु. | बर (भर) | × | बरत (भरत) |
| उ. पु. | × | × | × |

आत्मनेपदे

| | | | |
|---|---|---|---|
| प्र. पु. | बरतँम् (भरताम्) | × | बरेंन्‌तँम् (भरन्ताम्) |
| म. पु. | बरङ्‌उह (भरस्व) | × | बरद्वेंम् (भरध्वम्) |
| उ. पु. | × | × | × |

लङ्

परस्मैपदे

| | | | |
|---|---|---|---|
| प्र. पु. | बरत् (अभरत्) | बरतेंम् (अभरताम्) | बरेंन् (अभरन्) |
| म. पु. | बरो (अभरः) | × | बरत (अभरत) |
| उ. पु. | बरेम् (अभरम्) | बराव (अभराव) | बराम (अभराम) |

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| | | आत्मनेपदे | |
| प्र. पु. | बरत (अभरत) | बरएँतेंम्, बरोंइथे (अभरेताम्) | बरॅन्त (अभरन्त) |
| म. पु. | बरङ्ह (अभरथाः) | × | बरद्वॅम् (अभरध्वम्) |
| उ. पु. | बइरे (अभरे) | × | × |

इदमत्रावधेयम् अस्मिंल्लकार आवेस्ताभाषायाम् अडागमो न भवति। वेदेऽपि लङ्लुङोरडागमाभावो न विरलः।

*विधिलिङ्*

परस्मैपदे

| | | | |
|---|---|---|---|
| प्र. पु. | बरोंइत् (भरेत्) | × | बरयेन् (भरेयुः) |
| म. पु. | बरोंइष् (भरेः) | × | बरएँत (भरेत) |
| उ. पु. | × | × | बरएँम (भरेम) |

*लेट्*

परस्मैपदे

| | | | |
|---|---|---|---|
| प्र. पु. | बरात्, बराइति (भरत्, भराति) | बरातों (भरातः) | बरँन् (भरान्) |
| म. पु. | बराहि (भरासि) | × | बराथ्र (भराथ) |
| उ. पु. | बरानि (भराणि) | × | बराम (भराम) |

आत्मनेपदे

| | | | |
|---|---|---|---|
| प्र. पु. | बराइते (भराते) | × | बरोओन्ते, बराइरे (भरै) |
| म. पु. | बर्राओङ्हे (भरासे) | × | × |
| उ. पु. | बराइ, बराने (भरै) | × | × |

एवम् आवेस्तायाम् अन्येऽपि लकारा दृश्यन्ते। —स्ययोगेन भविष्यति लृट्-लकारे वच्-धातोः वख़्स्या (गा.) (वक्ष्यामि)। गणा अपि प्रायेण संस्कृतवद् दृश्यन्ते। अदादिगणीयस्य अह्-(अस्) धातोः कतिचिद् रूपाणि दर्श्यन्ते। संस्कृते यथा परस्मैपद एव अयं प्रयुज्यते।

अह् (= अस्)

*लट्*

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | अस्ति (अस्ति) | स्तो (स्तः) | हेन्ति (सन्ति) |
| म. पु. | अहि (असि) | × | × |
| उ. पु. | अह्मि (अस्मि) | × | महि (वै. स्मसि, स्मः। लौ. स्मः) |

*लोट्*

| | | | |
|---|---|---|---|
| प्र. पु. | अस्तु | × | हेन्तू |
| म. पु | ज़्दी | × | × |
| उ. पु | × | × | × |

*विधिलिङ्*

| | | | |
|---|---|---|---|
| प्र. पु. | ह्यात्, ख़्यात् | × | ह्यान्, ख़्येन् |
| म. पु. | ख़्याएँ | × | ख़्याता |
| उ. पु. | ख़्येम | × | ख़्यामा |

*लेट्*

| | | | |
|---|---|---|---|
| प्र. पु. | अङ्हत् | अङ्हइती | अङ्हैन् |
| म. पु. | अङ्हो | × | × |
| उ. पु. | × | × | × |

एवं णिजन्ता सन्नन्ता यङन्ताश्च धातवो दृश्यन्ते, यथा **उरूपयेइन्न्ति** (= सं. रोपयन्ति), **जीजिषेॅन्न्ती** (= सं. जिजीषन्ति), **चरेॅकेॅरेॅमही** (सं. चर्करीमः)। **बर-** धातोः कर्मवाच्ये रूपं **बइर्येइते** (सं. भ्रियते)। नामधातवोऽपि सन्ति, यथा **बएॅषज़्यति** (सं. भेषज्यति)।

बहवः कृदन्ताः शब्दा आवेस्तायामुपलभ्यन्ते। दृष्टान्तरूपेण शतरि **बर्**-धातोः **बरऩ्त्** (सं. भरन्), **अह्**-धातोः **हऩ्त्** (सं. सन्), **दा**-धातोः (सं. धा-धातोः) **दथेॅन्त्** (सं. दधत्), निष्ठायां **वर्ध**-धातोः (= वृध् - धातोः ) **वेॅरेॅज़्दो** (सं. वृद्धः) क्तिनि **अनुमइतिष्** (सं. अनुमइतिष्) इह उपस्थाप्यन्ते। तुमर्थे वेदवत् **केॅरेॅतेॅए** (सं. कृतये) इत्यादीनि रूपाणि दृश्यन्ते।

एवं बहवः संस्कृतसदृशास्तद्धितान्ता शब्दा अपि दृग्गोचरा भवन्ति। उदाहरणानि, **अयङ्हो** (सं. आयसः), **सतोतेॅमो** (शततमः), **उपरतात्** (सं. उपरतात्), **हप्तथो** (सं. सप्तथः = सप्तमः, यथा षष्ठः), **वङ्हुथ्व-** (सं. वसुत्व-), **नाउम-** (सं. नवम-), **गओमऩ्त्** ( सं. गोमत्-) **अभवऩ्त्-** (सं. अभवत्-), **येस्न्य-** (सं. यज्ञिय-)।

आवेस्तायां समासोऽपि दृश्यते। दृष्टान्तास्त्विमे, **वीस्पइति-** (सं. विश्पति-), **रथएॅष्त-** (सं. रथेष्ठ-), **आसुअस्प-** (सं. आश्वश्व-), **दुजुख़्त-** (सं. दुरुक्त-), **दुष्वकेॅरेॅत-** (सं. दुष्कृत-)। प्रायेण द्वयोरेव पदयोः समासो भवति। परन्तु पदत्रयसमासो न विरलः। उदाहरणं **द्रव-अष-चिथ्रो** (सं. ध्रुवर्तचित्रः)। **चिथ्र-**शब्दस्य अर्थो 'वंशः' 'कुलम्'।

# पाठमाला

## लिप्यन्तरम्

| | |
|---|---|
| अ | |
| आ | ( ा ) |
| इ | ( ि ) |
| ई | ( ी ) |
| उ | ( ु ) |
| ऊ | ( ू ) |
| अॅ | ( ॅ ) |
| अॅं | ( ॅं ) |
| ॲ | ( ॆ ) |
| अे | ( े ) |
| औ | ( ै ) |
| ओ | ( ो ) |
| ओ | ( ॊ ) |
| आँ | ( ँ ) |
| अॅर | ( ॅ र॑ ) |
| क् | |
| ख्. | |
| ग | |
| ग़ | |
| ङ् | |
| च | |
| ज | |
| ञ | |
| त | |
| त़ | |
| थ् | |
| द् | |
| द्. | |
| न् | |
| ं | |
| प् | |
| फ़् | |
| ब़् | |
| व़् | |
| .म् | |
| य् | |
| य | |
| ऱ् | |
| व् | |
| व् | |
| श् | |
| श | |
| श | |
| स | |
| ज़ | |
| झ़ | |
| ह | |
| ख्व | |
| ह(ख्) | |

इदमत्रावधेयम्। पाठमालायां काङ्गा-सोनटक्के-महाशयाम्यां परिवर्तितदेवनागरलिप्यां प्रकाशिते अवेस्ता-ग्रन्थे यल्लिप्यन्तरमनुसृतं तदेव अत्रापि स्वीकृतम्।

—क्षेत्रेशचन्द्रचट्टोपाध्यायः

[यत्र ग्रन्थकारेण स्वकीयदृशा तस्मिन् किञ्चित् परिवर्तनं परिशोधनं वा कृतम्, तत्र ग्रन्थकर्तुः पाठ एव उपरि, श्रीकाङ्गा-सोनटक्के-महाशयाभ्यां स्वीकृतः पाठश्चाधस्तात् पादटिप्पणी-रूपेण सम्पादकाभ्यां प्रदत्तो वर्तते

—ग्रन्थसम्पादकौ]

# अहुन वइर्य

## हा ६२

यथा[१] अहू वइर्यो अथा[२] रतुश् अशात् चीत्[३] हचा।
वङ्हॅउश् दज़्दा मनङ्हो श्यओथ्ननाँम् अङ्हॅउश मज़्दाइ।
ख़्शथ्रॅम्[४] चा अहुराइ आ यिम् द्रिगुब्यो ददत् वास्तारॅम्।।

**असुः वर्यः**

यथा असुः वर्यः अथ ऋतुः ऋतात् चित् सचा।
वसोः *दाधा मनसः च्यौत्नानाम् असोः मेधायै।
क्षत्रम् च असुराय आ यम् *ध्रिगुभ्यो ददत् वास्तारम्।।

[ **यथा असुः** प्राणात्मकः सर्वेश्वरः **वर्यः** श्रेष्ठः **अथ** तथा **ऋतुः** धर्मोपदेष्टा नियामको वा अपि **ऋतात्** ऋतानुगमनात् = ऋतानुगमनेन **चित् सचा** सह अर्थात् तत्कारणात्। कार्यकारणयोरविनाभावात्। **वर्यः**। **वसोः मनसः** कल्याण-कारिण्याः धियोऽभिमानिदेवतायाः ***दाधा** दानं **असोः मेधायै** जीवलोकस्य स्वाम्यर्थं कृतेभ्यः **च्यौत्नानाम्** (= च्यौत्नेभ्यः) कार्येभ्यो भवति; 'यः कोऽपि असोः मेधायाः निमित्तं कार्याणि करोति स एव वसोः मनसः दानं लभते' इति भावः। **असुराय** (= असुरस्य) प्रभोः **क्षत्रम्**, कारयित्री शक्तिः **आ** तस्मै दीयते **यम्** (असुरः) ***ध्रिगुभ्यो** प्रतिहतगतिभ्यो दरिद्रेभ्य इति यावत् **वास्तारम्** रक्षकं पालकं वा **ददत्** दद्यात्।]

---

१. था
२. था
३. अशात्चीत्
४. क्षथ्रॅम्चा
*. संस्कृतसाहित्ये अदृष्टाः केवलं भाषाशास्त्रदृष्ट्या अनुमिताः शब्दास्तारका-चिह्नयुक्ताः सन्ति।

## अशॅम् वोहू

अशॅम्[१] वोहू वहिश्तॅम् अस्ती
उश्ता अस्ती उश्ता अह्माइ
ह्यत् अशाइ[२] वहिश्ताइ अशॅम्[३] ॥

ऋतम् वसु

ऋतम् वसु वसिष्ठम् अस्ति,
उष्टा अस्ति, उष्टा अस्मै।
यत् ऋताय वसिष्ठाय ऋतम् ॥

[ **ऋतम्** धर्मः **वसिष्ठं** कल्याणतमं **वसु** कल्याणम् **अस्ति, उष्टा** (श्रेयस्करस्य मार्गस्य) प्रकाशकः **अस्ति; उष्टा** प्रकाशकः मार्गदर्शक इत्यर्थः **अस्मै** तदर्थं (भवति) **यत्** यः **वसिष्ठाय ऋताय** कल्याणतमाय धर्माय **ऋतम्** (अनुतिष्ठति); यो निष्कामभावेन धर्मार्थमेव धर्ममनुचरति तस्मै कल्याणतमो धर्मः श्रेयस्करस्य मार्गस्य प्रकाशको भवतीति भावः ॥ ]

---

१. अषम्
२. अषाइ
३. अषम्

## येङ्हे हाताँम्

**हा ३३**

**येङ्हे[1] हाताँम् आअत् येस्ने पइती वङ्हो ।**
**मज़्दाो अहुरो वअेथा अशा[2]त् हचा ।**
**योङ्हाँम् चा ताँस्चा तोस्चा यज़मइदे ॥**

**यस्य सताम्**

**यस्य सताम् आत् यज्ञे प्रति वस्यः ।**
**मेधाः असुरो वेद ऋतात् सचा ।**
**यासाम् च तांश्च ताश्च यजामहे ॥**

[ **सताम्** प्राणिनां **आत्** मध्ये (एष पुरुषः) **यज्ञे** यज्ञं **प्रति वस्यः** कुशलतरः (इति एवं) **यस्य** (विषये) **असुरः मेधाः** परमेश्वरः **ऋतात्** =ऋतेन **सचा** सह = कारणात्, ऋतद्वारेण इत्यर्थः **वेद** जानाति **यासाम् च** (विषये असुरो मेधा एवमेव जानाति)। **तांश्च ताश्च यजामहे** पूजयामः। ]

---

१. येङ्हे
२. षा

## अहुनवइति गाथा

हा २९

ख़[१]श्मइब्या गॅउश् उर्वा गॅरॅज़्दा ।
कह्माइ मा थ़्वरोइद्दूम्[२] कॅं मा तशत्[३] ।
आ मा अएशॅ[४]मो हज़स्चा रॅमो ।
आहिशाया[५] दॅरॅश्चा तॅविश्चा ।
नो इत् मोइ वास्ता[६] ख़्श्मत्[७] अन्यो ।
अथ़ा[८] मोइ साँस्ता वोहू वास्त्र्या ॥ १ ॥

असुमति गाथा

*साति: २९

युष्मभ्यम् गो: *उर्वा (अ)गर्हत,
"कस्मै मां (अ) त्वक्षध्वम् क: माम् (अ) तक्षत् ।
आ माम् *ऐष्मो सहश्च रम: ।
आसिषाय धृष् (टि:) च तविश्च ।
नो इत् मयि *वास्ता युष्मत् अन्य: ।
अथ मयि शास्त वसु *वास्त्र्या" ॥ १ ॥

**युष्मभ्यम्** 'अहुरमज़्देन' संह 'अमेशस्पेन्ता' नामकेभ्यो देवेभ्य: **गो: उर्वा** आत्मा **अगर्हत** उपालेभे, "**कस्मै** कस्मात् प्रयोजनात् **मां अतक्षध्वम्** निर्मितवन्त:, **क: माम् अतक्षत्** निर्मितवान् । **माम्** (उत्पीडकानां) **ऐष्म:** क्रोध: **सहश्च** शक्तिश्चं **रम:** चौर्यं **धृष्टि:** धर्षणं **तविश्च** बलम् अर्थात् उत्पीडनञ्च **आ** समन्तात् **आसिषाय** आबध्नाति । **युष्मत् अन्य: *वास्ता** रक्षक: **मयि** (=मह्यम्) **नोइत्** नैव (विद्यते) । **अथ मयि** (=मह्यम्) **वसु** कल्याणकर: ***वास्त्र्या** पालक: **शास्त** आदिशत" ॥

---

१. क्ष्म
२. थ्वरोज़्दूम्
३. तषत्
४. ष
५. षा
६. वास्त्रा
७. क्ष्मत्
८. अथा

अदा तशा[1] गँउश् पॅरॅसत् अशॅम्[2] ।
कथ़ा तोइ गवोइ रतुश् ।
ह्यत् हीम् दाता ख़्शय-ृतो ।
हदा वास्त्रा गऑदायो थ्वक़्शो ।
कॅम् होइ उश्ता अहुरॅम् ।
यँ द्रॅग्वोदॅबीश् अएशॅमॅम्[3] वादायोइत् ।। २ ।।

अध तक्षा गो: (अ) पृच्छत् ऋतम् ।
कथा ते गवे ऋतु: ।
यत् सीम् (अ) धात क्षयन्त: ।
सध *वास्त्रा गोधाया: त्वक्ष: ।
कम् अस्यै उष्ठ असुरम् ।
यो द्रुघ्वद्भि: ऐष्मम् बाधयेत् ।। २ ।।

[ अध अथ गो: तक्षा गो: घटयिता 'असुरमेधा:' इत्यर्थ: ऋतम् 'ऋत-' नामकं देवम् अपृच्छत् "कथा कथं ते तव गवे (= गो:) ऋतु: नियामको यत् (त्वम् अन्ये च देवा: अस्यां गवि) क्षयन्त: प्रभवन्त: सीम् अस्यै *वास्त्रा रक्षकेण सध सह गोधाया: (=गोधायसम्) गोपालकं त्वक्ष: बलम् अधात। कम् अस्यै गवे असुरम् प्रभुम् उष्ठ कामयथ य: प्रभु: द्रुघ्वद्भि: द्रुह्यद्भि: सह ऐष्मम् उत्पीडकानां क्रोधं बाधयेत" ]

---

१. तषा
२. अषम्
३. अएषमम्

अह्माइ अशा नोइत् सरँजा।
अद्बअेशो गवोइ पइती ब्रवत्।
अवअेशाँम् नोइत् वीदुये।
या शवइते आद्रँ्ग् अॅरॅश्वोङ्हो।
हाताँम् ह्वो अऔजिश्तो।
यह्माइ ज़वँ्ग् जिमा कॅरॅदुशा॥ ३॥

अस्मै ऋतम् नोइत् *शर्धा।
अद्वेषो गवे प्रति-ब्रवत्।
*अवेषां नोइत् *विदुये।
*या च्यवते आद्रान् ऋष्वसः।
सताम् *स्वो ओजिष्ठो।
यस्मै हवान् गमाम *कृधुषा॥ ३॥

[**अस्मै** असुरमेधायै **ऋतम्** ऋतनामकः देवः (यः) **नोइत्** नैव ***शर्धा** बलवान्, समर्थ इति यावत् क्रूरः **गवे** गां प्रति च **अद्वेषः** द्वेषरहितः, **प्रति-ब्रवत्** प्रत्यब्रवीत्, ***अवेषां** अमीषां भूलोकनिवासिनां (मध्ये) **नोइत्** न कोऽपि ***विदुये** ज्ञायते ***या** (यः) **ऋष्वसः** धार्मिकात् जनात् **आद्रान्** धर्मविमुखान् **च्यवते** दूरीकरोति **सताम्** प्राणिनां (मध्ये) ***स्वो** स (ईदृक् धर्मरक्षकः) **ओजिष्ठो** [अधुना न विद्यते] **यस्मै** (= यस्य) **हवान्** आह्वानान् प्रति **कृधुषा** त्वरया **गमाम** गच्छेम॥ ]

मज़्दाो सख़्वारॅ मइरिश्तो।
या ज़ी वावॅरॅज़ोइ पइरी-चिथ़ीत्।
दअेवाइश्चा मश्याइश्चा।
या चा वरॅशइते अइपी-चिथ़ीत्।
ह्वो वीचिरो अहुरो।
अथ़ा नॅं अङ्हत् यथ़ा ह्वो वसत्॥ ४॥

मेधाः सस्वराणि *स्मरिष्ठः।
या हि वावृजे परि चिदित्।
देवैश्च मर्त्यैश्च।
या च वर्क्ष्यते अपि चिदित्।
*स्वो *विचिरो असुरः।
अथ नः असत् यथा *स्वो वशत्॥ ४॥

[ मेधा असुरमेधाः परमेश्वरः सस्वराणि सुकृतानि (सूक्तानि) स्मरिष्ठः स्मरणशीलतमः 'सर्वाधिकं स्मरति' इति भावः, या (=यानि) (सूक्तानि) हि देवैश्च मर्त्यैश्च परि चित् इत् वावृजे प्राचीनकाले प्रेषितानि, या (=यानि) च (सूक्तानि) अपि चित् इत् भविष्यत्काले वर्क्ष्यते करिष्यन्ते। *स्वो स (असुरमेधा) *विचिरो विचारकः असुरः प्रभुः। यथा *स्वो सः वशत् कामयते अथ तथा नः अस्मभ्यम् असत् भवति॥ ]

अत़् वा उस्तानाइश् अह्वा।
ज़स्ताइश् फ़्रीनॅम्ना अहुराइ आ।
मँ उर्वा गँउश्चा अज़्यो।
ह्यत् मज़्दाँम् द्वइदी फ़्ररॅसोब्यो[1]।
नोइत् अॅरॅझज्योइ[2] फ़्रज्याइतिश्।
नोइत् फ़्शुयंते[3] द्रॅग्वसू पइरी॥ ५॥

*अत् वा उत्तानैः आस्व।
हस्तैः प्रीणयमानौ असुराय आ।
मे *उर्वा गोश्च *अज्यायाः।
यत् मेधाम् *दुवहि प्रशस्तिभ्यः।
नोइत् ऋजुजीवाय *प्रज्यातिः।
नोइत् *पशुयन्ते द्रुह्वत्सु परि॥ ५॥

[ ***अत्** अतः **वा उत्तानैः हस्तैः प्रीणयमानौ** (अहं ऋतनामा देवः गौश्च) **आस्व** स्थितौ अभवाव भवाव इत्यर्थः। **मे** (ऋतस्य) मम ***अज्यायाः** (=अज्यमानायाः, वीयमानायाः) उपद्रवितायाः **गोश्च *उर्वा** आत्मा **यत्** इत्थं **पृशस्तिभ्य** आशीर्वादेभ्यः अनुग्रहेभ्यो वा **मेधाम्** असुरमेधं प्रभुं ***दुवहि** प्रार्थयावः (यत्) **ऋजुजीवाय** सत्यशीलस्य ***प्रज्यातिः** क्षतिः **नोइत्** मा भूत्, ***पशुयन्ते** पशुपालके **द्रुह्वत्सु परि** हिंसकानां मध्ये (आपदः) **नोइत्** मा पतन्तु॥ ]

---

१. फ़्रसाब्यो
२. अॅरॅजज्योइ
३. फ़्शुयँस्ते

अत् अँ वओचत् अहुरो।
मज़्दाो वीद्वाो वफ़ूश् व्यानया।
नोइत् अएवा अहू विस्तो।
नअेदा रतुश् अशात् चीत्[१] हचा।
अत् ज़ी थ्वा फ़्शु[२]यन्तअेचा।
वास्त्र्याइ[३] चा थ्वोरॅश्ता ततशा[४] ॥ ६ ॥

*अत् आ वोचत् असुरो मेधा।
विद्वान् *वपुः व्यानया।
नोइत् एव असुः वित्तः।
नेध *ऋतुः ऋतात् चित् सचा।
*अत् हि त्वा *पशुयन्तये च।
*वास्त्र्याय च त्वष्टा ततक्ष ॥ ६ ॥

[ *अत् तदनन्तरं असुरो मेधा *व्यानया स्वाभाविकेन ज्ञानेन *वपुः विधानं विद्वान् जानन् (ऋतम्) आ वोचत्, "नोइत् एव नैव (त्वया) असुः (गोरक्षकः) प्रभुः वित्तः प्राप्तः, नेध न इह ऋतात् चित् सचा सह अर्थात् कारणात् (ऋतानुवर्तित्वात् इत्यर्थः) *ऋतुः नियामकः (नियुक्तः), *अत् अतः (किमर्थम्) त्वष्टा सृष्टि-निर्माता (अहम्) त्वा त्वाम् *पशुयन्तये पशुपालनाय च *वास्त्र्याय रक्षणाय च ततक्ष निर्मितवान् ?" ॥ ]

---

१. अषात्चीत्
२. फ़्शु
३. वास्त्र्याइचा
४. ततषा

तँम् आज़ूतोइश् अहुरो।
माँथ्रम् तशत् अशा हज़ओशो[१]।
मज़्दो गवोइ ख़्श्वीदॅम्चा[२]।
ह्वो ऊरुश[३]अेइब्यो स्पॅ॰तो सास्नया।
कस्ते वोहू मनङ्हा।
य ई दायात् ॲॲआवा मरॅतअेइब्यो ।। ७ ।।

तम् आहुतेः असुरो।
मन्त्रम् (अ) तक्षत् ऋता सजोषः।
मेधा गवे *क्ष्वीदम् च।
*स्वो ऋजुभ्यः श्वेतः *शासनया।
कस्ते वसु मनाः।
यः *ई(म्) *धायात् अवसा मर्त्येभ्यः ।। ७ ।।

[ *स्वो सः श्वेतः पुण्यात्मा असुरो मेधा परमेश्वरः *शासनया (=शासनेन) स्वकीयेनादेशेन ऋजुभ्यः धार्मिकेभ्यः आहुतेः मन्त्रम् *क्ष्वीदम् क्षीरम् ऋता ऋतेन सजोषः एकचित्ततया अतक्षत् निर्मितवान्; गावः धार्मिकेभ्यः क्षीराय निर्मिताः न तु घाताय इत्यर्थः। [ असुरोमेधा 'वसुमनाः' इति नामकं देवं पृच्छति ] (भो) वसुमनाः ते तव (मनसि) कः यः ईम् नूनं मर्त्येभ्यः (धार्मिकेभ्यः) जनेभ्यः अवसा साहाय्येन (मम सृष्टिं) *धायात् (=धेयात्) पालयेत् ।। ]

---

१. हज़ओंषो
२. क्ष्वीदॅम्चा
३. ष

अएम् मोइ इदा विस्तो।
यँ नँ अएवो सास्नो गूशता।
ज़रथुश्त्रो स्पितामो।
ह्वो नँ मज़्दा वश्ती अशा[1]इचा।
चरॅकॅरॅथ्रा स्रावयञ्हे।
ह्यत् होइ हुदॅमॅम् ह्याइ वख़ॅद्रह्या[2] ॥ ८ ॥

अयम् मे इध वित्तः।
यः नः एव शासनानि *घोषत।
जरठोष्ट्रः श्वितमः।
*स्वो नु मेधा (यै) वष्टि ऋताय च।
चर्कृत्या *श्रावयसे।
यत् *स्वे *सुधामम् दीयेत वक्त्रस्य॥ ८ ॥

[ (वसुमनाः आह) "अयम् जरठोष्ट्रः श्वितमः श्वितम-वंशोद्भवः जरठोष्ट्रः मे इध इह वित्तः ज्ञातः यः एव नः अस्माकम् शासनानि *घोषत (=अघोषत्) अशृणोत्। *स्वो सः नु मेधायै ऋताय च चर्कृत्या स्तुत्या *श्रावयसे श्रावयितुं जनेषु प्रचारयितुमित्यर्थः वष्टि कामयते, यत् यतः *स्वे तस्मै वक्त्रस्य वाण्याः *सुधामम् समृद्धिः दीयेत (यतः स मेधायाः ऋतस्य च शासनानि स्तुतिभिः प्रचारयितुं कामयते, अतस्तस्मै वाण्याः समृद्धिः दीयता-मित्यर्थः ॥ ]

---

१. अषा
२. वख़ॅध्रह्या

अत् चा गॅंउश् उर्वा रऔस्ता।
यॅं अनअेशॅ[1]म् ख़्शॉ[2]न्मॅंने राद्दॅम्।
वाचॅम् नॅरॅश् असूरह्या।
यॅम् आ वसॅमी ईशा-ख़्शथ़ीम्[3]।
कदा यवा ह्वो अङ्हत्।
य होइ ददत् ज़स्तवत् अवो ॥ ९ ॥

*अत् च गोः *उर्वा *रोष्ट।
*यत् अनीशम् क्षममाणायै राधम्।
वाचम् नरः अशूरस्य।
*यत् आ वश्मि ईश-क्षत्र्यम्।
कदा *यवा *स्वो असत्।
यः *स्वे ददत् हस्तवत् अवः ॥ ९ ॥

[ *अत् (=अतः) तदनन्तरं च गोः *उर्वा आत्मा *रोष्ट अरोदीत्, "यत् क्षममाणायै (उत्पीडनं) सहमानायै (मह्यं) अशूरस्य अशक्तस्य नरः नरस्य (शक्तिरहिताम्) वाचम् वाणीम् (ईदृशं) अनीशम् प्रभावशून्यं राधम् दानम् (दत्तम्) यत् ईश-क्षत्र्यम् प्रबलशासनं (जनं) आ वश्मि कामये ('अहं त्वत्तः स्वरक्षणाय शक्तिसम्पन्नं जनं प्रार्थितवती, प्राप्ता तु मया अस्य निर्बलस्य जरठोष्ट्रस्य वाणी, ननु विडम्बनैषा' इति भावः)। कदा *यवा कालेन, 'कस्मिन् काले' इत्यर्थः, *स्वो सः (ईदृक् शक्तिसम्पन्नो जनः) असत् भवेत् ( भविष्यति इत्यर्थः), यः *स्वे तस्यै गवे (मह्यमित्यर्थः) हस्तवत् सशक्तं अवः साहाय्यं ददत् दद्यात् ॥ ]

---

१. ष
२. क्षॉन्मने
३. ईषा-क्षथ्रीम्

यूझँ[1]म् अऐइब्यो अहुरा ।
अओंगो दाता अशा[2] ख़्शथ्रॅम् चा[3] ।
अवत् वोहू मनङ्हा ।
या हुर्शॅ[4]इतीश् रामाँम् चा[5] दात्
अज़ॅम्चीत् अह्या मज़्दा ।
थ्वाँम् मँञ्ही पओउर्वीम् वऐदॅम् ॥ १० ॥

यूयम् एभ्यो असुर ।
ओजः *दत्तं, ऋत, क्षत्रम् च ।
*अवत्, वसुमनः ।
*या सुक्षितीः रामान् च दात् ।
अहम् चित् अस्य, मेधा ।
त्वाम् (अ) मंसि पूर्व्यम् वेदम् ॥ १० ॥

[ असुर ! ऋत ! वसुमनः ! यूयम् एभ्यः (जरठोष्ट्राय भविष्यद्भ्यश्च धर्माचार्येभ्यः)*अवत् तत् ओजः क्षत्रम् शक्ति च दत्त *या यत् (अस्मभ्यम्) सुक्षितीः सुनिवसतीः (सुस्थितीः) रामान् मोदान् च दात् दद्यात् । मेधा ! अहम् चित् त्वाम् अस्य जरठोष्ट्रस्य पूर्व्यम् श्रेष्ठम् वेदम् ज्ञानम् अमंसि मन्ये ('जरठोष्ट्र एव प्रथमः यः असुरमेधां वेद' इति भावः) ॥ ]

---

१. जॅं
२. षा
३. क्षथ्रॅम्चा
४. षॅं
५. रामॉम्चा

कुदा अशॅम्[१] वाहू चा[२] मनो।
ख़्शथ्रॅम् चा अत्[३] मा मशा[४]।
यूझ़ॅम्[५] मज़्दा फ़्राख़्श्नॅने[६]।
मज़ोइ मग़ाइ आ पइती- ज़ानता।
अहुरा नू नो अवरॅ।
अॅह्मा रातोइश् यूश्मा[७]वताँम् ॥ ११ ॥

कदा ऋतम् वसु च मनः।
क्षत्रम् च *अत् मा *ममक्ष।
यूयम्, मेधा, प्रज्ञायै।
*महाय मघाय आ प्रतिजानीत।
असुर नु नः *अवसः।
आस्म रातेः युष्मावताम् ॥ ११ ॥

(जरठोष्ट्रः प्रार्थयति) कदा ऋतम्, वसुमनः च क्षत्रम् च (एतन्नामकाः देवाः) मा माम् *ममक्ष प्रेरिष्यन्ते (धर्मप्रचारणे)। (हे) मेधा (आभ्यां देवाभ्यां सह) यूयम् *महाय महते मघाय पूजायै, प्रज्ञायै प्रज्ञाप्रदानार्थम् प्रतिजानीत। (हे) असुर प्रभो! युष्मावताम् तव अन्ययोश्च देवयोः नः अस्मभ्यम् अवसः साहाय्यस्य रातेः दानस्य नु (कृतज्ञाः) आस्म॥

---

१. अषॅम्
२. वाहूचा
३. क्षथ्रॅम्चा
४. षा
५. यूज़ॅम्
६. फ्राक्ष्नॅने
७. यूष्मा

## अहुनवइति गाथा (असुमती गाथा)

हा ३० (सातिः ३०)

अत् ता वख़्श्या[1] इशॅ[2]न्तो।
या मज़्दाथा ह्यत् चीत् वीदुशे[3]।
स्तओता चा[4] अहुराइ।
येस्न्या चा वङ्हॅंश् मनङ्हो।
हुमाँज़्द्रा अशा[5] यै चा।
या रओचॅंबीश् दरॅसता उर्वाज़ा ॥ १ ॥

*अत् ता वक्ष्या(मि) इष्यतः।
या मेधा-*धाता यत् चित् विदुषे।
स्तुता च असुराय।
*यज्ञा च वसोः मनसः।
*सुमन्त्रा ऋताय च।
या रोचेभिः *दृश्येयाताम् *उरुवाजा ॥ १ ॥

(अहं जरठोष्ट्रः)*अत् अधुना इष्यतः (श्रोतुम्) इच्छतः ता तौ (श्वेतमन्यु-अघमन्यु-नाम्न्यै ज्योतिःसृष्टेः तमःसृष्टेश्च अधिदेवते) वक्ष्यामि। या यौ मेधा-धाता परमेश्वरेण विहितौ, यत् चित् विदुषे यद्विषये ज्ञानमपेक्ष्यम्। (अहं पुनः) असुराय परमेश्वराय स्तुता ( =स्तुतानि) स्तोत्राणि च (वक्ष्यामि), वसोः मनसः यज्ञा (=यज्ञान्) पूजाः च ऋताय च*सुमन्त्रा (सुमन्त्रान्) (वक्ष्यामि) यथा अहुराद्यर्थं स्तोत्रादिकं क्रियेत। या यौ द्वौ मन्यू रोचेभिः स्वकीयैः तेजोभिः भानैरिति यावत्।*उरुवाजा (शुभाशुभयोः) प्रभूतबलौ दृश्येयाताम् ज्ञायेताम्। असुरस्य वसोर्मनस ऋतस्य च स्तोत्रादिकं कर्तव्यम्। न हि अघमन्योरनुसरणं कार्यमित्यर्थः।

---

१. वक्ष्या
२. इष
३. वीदुषे
४. स्तओताचा चा
५. अषा

स्त्रओता गॅउशाइश् बहिश्ता।
अवअेनता सूचा मनङ्हा।
आवरॅनाो वीचिथ़ह्या।
नरॅम् नरॅम् ख़्वख़्याइ तनुये।
परा मज़े[१] योङ्हो ।
अह्याइ नँ सज़्याइ बओंदं्तो पइती ॥ २ ॥

शृणोत *घोषैः वसिष्ठा (नि) ।
आवेनत *शुचा मनसा ।
*आवरणाय *विचितस्य ।
नरम्-नरम् स्वस्यै तन्वे ।
पुरा महः *यासः ।
अस्मै नु *छन्दध्यै बोधन्तः प्रति ॥ २ ॥

**शृणोत** शृणुत ***घोषैः** कर्णैः **वसिष्ठानि** कल्याणतमानि (वचांसि), ***शुचा** पवित्रेण **मनसा नरम्-नरम्** प्रतिनरम् **स्वस्यै तन्वे** आत्मनः शरीराय (स्वयम् इति भावः) **आवरणाय** संवरणाय (श्वेतमन्युप्रदिष्टः पुण्यमार्गः, अघमन्युप्रदर्शितश्च पापमार्गः एतयोः मार्गयोः) ***विचितस्य** विचयनस्य (सम्बन्धे) **आवेनत** इच्छां कुरुत। **महेः** महतः **यासः** प्रयाणात् **पुरा** पूर्वं **अस्मै *छन्दध्यै** निजां रुचिं सम्पादयितुम्। **प्रतिबोधन्तः** प्रबुध्यमानाः सम्यग्ज्ञानयुक्ताः सन्तः।

---

१. मज़ॅ

अत् ता मइन्यू पऑउरुये।
या यँमा ख़्वफ़ॅना अस्न्वातॅम्।
मनहि चा[1] वचहि चा[2]।
श्यऑथ्रनोइ ही वह्यो अकॅम् चा[3]।
आस्चा हुदोङ्हो ।
अॅरॅश् वीश्याता नोइत् दुज़्दोङ्हो ॥ ३ ॥

आत् ता मन्यू पूर्व्यौ।
या यमा स्वप्ना अश्रावयेताम्।
मनसि च वचसि च।
*श्चौत्ले सी(म्) वस्यो अघम् च ।
अ(न) योः च *सुधासः।
ऋजु व्यचिन्वत नोइत् दुर्धासः ॥ ३ ॥

*आत् तथा ता तौ मन्यू (पुण्यात्मा श्वेतमन्युः पापात्मा अघमन्युश्च) पूर्व्ये प्रथमतः या यौ यमा यमौ सहोत्पन्नौ *स्वप्ना स्वप्ने (मां जरठोष्ट्रम्) अश्रावयेताम् स्वरूपम् अदर्शयेताम् इत्यर्थः सीम् एतौ मनसि च वचसि च श्च्यौत्ले कर्मणि च वस्यः पुण्यःअघम् पापः च (आस्ताम्; एतयोः श्वेतमन्युः पुण्यकर्मा अघमन्युश्च पापकर्मा इत्यर्थः)। अनयोः चं *सुधासः सुधियः ऋजु सम्यक् व्यचिन्वत नो इत् न च *दुर्धासः दुर्धियः॥

---

१. मनहिचा
२. वचहिचा
३. अकॅम्चा

अत् चा ह्यत् ता हँम् मइन्यू ।
जसअेतॅम् पओ[1]उर्वीम् दज़्दे ।
गअेम् चा[2] अज्याइतीम् चा ।
यथ्रा चा अङ्हत् अपॅमॅम् अङ्हँहुश्
अचिश्तो द्रॅग्वताँम् ।
अत् अशा[3]उने वहिश्तॅम् मनो ॥ ४ ॥

आत् च यत् ता सम् मन्यू ।
(अ) गच्छेताम् पूर्व्यम् दधाते ।
गयम् च *आज्यातिम् च ।
यथा च असत् अपमम् असोः ।
अचित्तं द्रुघ्वताम् ।
आत् ऋतावणे वसिष्ठम् मनः ॥ ४ ॥

[ *आत् तथा च यत् यदा ता तौ मन्यू सम् अगच्छेताम् समचरताम् (तदा तौ) पूर्व्यम् प्रथमतः गयम् जीवम् प्राणान् इत्यर्थः च *आज्यातिम् आज्यानिम् प्राणाभावम् (मृत्युमित्यर्थः) दधाते (श्वेतमन्युः जीवं दधे, अघमन्युश्च मृत्युं दधे); यथा च असोःप्राणानां (सृष्टेरित्यर्थः) अपमम् प्रयोजनम् (पूर्णम्) असत् स्यात्, द्रुघ्वताम् धर्मद्रोहवताम् अचित्तम् अचित्तता मोह इति यावत् (अघमन्युलोकस्य भागम्) आत्) तथा च ऋतावणे ऋतवते धर्मपरायणाय वसिष्ठम् कल्याणतमं मनः ]

---

१. अ़ा
२. चा
३. षा

अयो मनिवो वरता।

यँ द्रॅग्वो अचिश्ता वॅरॅज़्यो।

अशॅम् मइन्युश् स्पँनिश्तो।

य ख़्रओझ़्[1] दिश्तँॅ ग् असँनो वस्ते

यअे चा[2] ख़्श्नऔशॅन् अहुरॅम्।

हइथ्याइश् श्यऔथ्नाइश् फ्रओरॅत् मज़्दाँम्॥ ५॥

अ(न) योः मन्व्वोः (अ) वरत।

यो *द्रुघ्वा अधिष्ठा(न्) *वृज्यः।

ऋतम् मन्युः *श्वेनिष्ठो।

यो *क्रोधिष्ठान् अश्मनः वस्ते।

ये च (अ) क्ष्णाषिषुः असुरम्।

सत्यैः च्योत्नैः प्रावरत् मेधाम्॥ ५॥

अनयोः मन्यवोः यः*द्रुघ्वा द्रोहवान् अघमन्युः (सः) अधिष्ठान् पापतमान् *वृज्यः वर्ज्यान् आचारान् अवरत अवृणुत (यश्च)*श्वेनिष्ठो श्वेततमो मन्युः(श्वेतमन्युरित्यर्थः) (सः) ऋतम् (अवृणुत), यः (श्वेतमन्युः)*क्रोधिष्ठान् दृढतमान् अश्मनः प्रकाशान् वस्ते परिधानत्वेन धारयति, ये च (प्राणिनः) सत्यैः च्यौत्नैः कार्यैः असुरम् मेधाम् परमेश्वरम् अक्ष्णाषिषुः प्रीणयितुकामाः (तेऽपि ऋतम्) प्रावरत् अवृण्वन्॥

१. ज़्
२. यअेचा

अयो नोइत् ॲरॅश् वीश्याता।
दअेवाचिना ह्यत् ईश् आ- दॅबआमा।
पॅरॅस्मयॅंग्‌ग् उपा-जसत्।
ह्यत् वॅरॅनाता अचिश्तॅम् मनो।
अत् अअेर्शॅ[1] मॅम् हॅंद्वारॅंता।
या बाँनयॅन् अहूम् मरॅतानो ॥ ६ ॥

अ(न) योः नोइत् ऋजु व्यचिन्वत।
देवाः चन यत् इमान् आ *दभमा।
पृच्छमानान् उपागच्छत्।
यत् (अ) वृण्वत अधिष्ठम् मनः।
*अत् ऐष्मम् सम् *(अ) द्रवन्त
*या (अ) भञ्जयन् असुम् *मर्तनः ॥ ६ ॥

**अनयोः** (मन्य्वोः) **देवाः चन** देवा अपि **ऋजु** सम्यक् **नोइत्** नैव **व्यचिन्वत, यत्** यदा **इमान्** देवान् (अनयोः कं वृणुमः इति **पृच्छमानान् आ** समीपं ***दभमा** वञ्चकः (अघमन्युः) **उपागच्छत्, यत्** यतः **अधिष्ठम् मनः अवृण्वत; अत्** अनन्तरं(च) **ऐष्मम्** कामं **समुद्रवन्त** अन्वधावन्त ***या** येन, (यस्मात् कारणादित्यर्थः) ***मर्तनः** मर्त्यस्य **असुम्** मानव-जीवनम् (अपि) **अभञ्जयन्** दूषितमकुर्वन्नित्यर्थः ॥

---

१. षॅ

अह्माइ चा[1] ख़्शथ्रा[2] जसत्।
मनङ्हा वाहू अशा चा।[3]
अत् कॅहर्पॅम् उतयूयितीश्।
ददात् आर्मइतिश् आँन्मा।
अऍशाँम् तोइ आ अङ्हत्।
यथा अयङ्हा आदानाइश् पआउरुयो ।। ७ ।।

अस्मै च क्षत्रम् (अ) गच्छत्।
मनसा-वसु *ऋता च।
अत् कृपम् *ऊती-ऊती:।
ददात् अरमति: *आनम्या।
एषाम् ते आ असत्।
यथा अयसा *आधानै: पूर्व्य: ।। ७ ।।

(य: श्वेतमन्यो: पुण्यमार्गम् अवृणोत्) **अस्मै च क्षत्रम्** दिव्या शक्ति: **मनसा-वसु** वसु-मनसा ***ऋता** ऋतेन **च** सह **अगच्छत्** (स: वसु-मनसा ऋतेन च सह दिव्यां शक्तिं प्राप्नोत् इत्यर्थ:) **अत्** तथा **ऊती-ऊती:** सुरक्षितम् **कृपम्** शरीरं ***आनम्या** नमस्या **अरमति:** देवी श्रद्धा ***ददात्** अदात् **यथा ते** तव (असुरमेधस: परमेश्वरस्य) **अयसा** (उत्तप्त) लौहेन ***आधानै:** परीक्षणै: (परीक्षितो भूत्वा दिव्य-लोकगमने) **एषाम्** अघमन्युवशवर्तिनां देवानां **पूर्व्य:** पूर्ववर्ती **आ असत्** अभूत् ।।

---

१. अह्माइचा
२. क्ष्थ्रा
३. अषाचा

अत् चा[१] यदा अऐशाँम्।
कऐना जमइती अऐनङ्हाँम्।
अत् मज़्दा तइब्यो ख़्श[२]थ्रंम्।
वोंहू मनङ्हा वाइवीदाइते।
अऐइब्यो सस्ते अहुरा।
योइ अशा[३]इ ददॅन् ज़स्तयो द्रुज़ॅम्॥ ८॥

*अत् च यदा एषाम्।
*चयनम् गच्छति एनसाम्।
*अत् मेधा तेभ्य: क्षत्रम्।
वसु-मनसा *वेविद्यते
एभ्य: शास्यते असुर।
*ये ऋताय ददन् हस्तयो: द्रुहम्॥ ८॥

**अत्** अनन्तरं **च यदा एषाम्** पापात्मनां **एनसाम्** पापानां ***चयनम्** दण्डादिकं फलं (तेभ्य:) **गच्छति** (स्वकृतानामघानां फलस्वरूपं नरकादिकं दण्डं तेऽघमन्युवशवर्तिनो जना: लभन्ते इत्यर्थ:)। ***अत्** तदनन्तरं हे **मेधा** प्रभो ! **तेभ्य:** भुक्तदण्डेभ्य: **वसुमनसा** 'वसुमना:' नामकदेव-द्वारेण (तव) **क्षत्रम्** शासनं विधानं वा **वेविद्यते** दीयते इत्यर्थ:। हे **असुर** परमेश्वर ! **एभ्य:** *शास्ते ऋजुमार्गस्य धर्माचरणस्य शिक्षा दीयते ***ये** येन परिणामत: धर्मेऽनुशिष्टास्ते **ऋताय** =ऋतस्य **हस्तयो: द्रुहम्** पापाचारं **ददन्** समर्पयन्ति॥

---

१. अत्चा
२. क्ष
~~३. षा~~

अत् चा[1] तोइ वअेम् ख़्यामा।
योइ ईम् फ़्रॅरपॅंम् कॅरॅनाउन् अहूम्।
मज़्दोस्चा अहुरोड्हो।
आ मोयस्त्रा बरना अशा[2] चा।
ह्यत् हथ्रा मनो बवत्।
यथ़ा चिस्तिश् अङ्हत् मअेथ़ा[3] ॥ ९ ॥

*अत् च ते वयम् स्याम।
ये ईम् प्राञ्चम् कृणवन् असुम्।
मेधाः च असुराः।
आ *मैत्राणि* भरमाणाः *ऋता च।
यत् सत्रा - मनाः भवत्।
यत्र चित्तिः असत् *मिथा॥ ९ ॥

*अत् अतः च वयम् ते तादृशाः स्याम ये असुम् जीवलोकम् प्राञ्चम् समर्थम् कृणवन् कृण्वन्ति कुर्वन्तीति हे मेधाः (आदरार्थकं बहुवचनम्) हे परमेश्वर! हे असुराः ईश्वराः च (यूयम्) *मैत्राणि सख्यानि *भरमाणाः भरन्तः *ऋता ऋतेन च सह (अस्मान्) आ आगच्छत यत् यतः यत्र यस्मिन् विषये चित्तिः बुद्धिः *मिथा संदिह्यमाना असत् तिष्ठेत् (तत्र) सत्रा-मनाः प्रज्ञानं भवत् भवेत्॥

---

१. अत्‌चा
२. षा
३. था

अदा ज़ी अवा द्रूजो।
अवो बवइती स्कॅं॰दो स्पयथ्रह्या।
अत् असिश्ता यऑज॰ते।
आ हुशि[१]तोइश् वङ्हॅउश् मनङ्हो।
मज़्दो अशख़्या चा।[२]
योइ ज़र्ज॰ते वङ्हाउ स्त्रवही॥ १०॥

अध हि अव द्रुहः।
अव भवति *स्कन्दः श्वात्रस्य।
*अत् *आशिष्ठा(नि) युञ्जते।
आ सुक्षितेः वसोः मनसः।
मेधायाः ऋतस्य च।
ये सहन्ते वसौ श्रवसि॥ १०॥

**अध** अथ हि नूनं **द्रुहः** धर्मद्रोहिणः **अव** अधःपतनं (तस्य) **श्वात्रस्य** समृद्धेः **अवस्कन्दः** विनाशः **भवति**। **अत्** तथा **ये** ऋतानुवर्तिनो जनाः **वसौ** भद्रे **श्रवसि** यशसि **सहन्ते** (ये धार्मिकाः भद्राय यशसे यतन्ते इत्यर्थः) (ते) **मेधायाः** परमेश्वरस्य, **ऋतस्य वसोः मनसश्च सुक्षितेः** आ सुक्षिति-पर्यन्तम् ***आशिष्ठा** काम्यतमेन **युञ्जते** युक्ताः भवन्ति (ते मेधादिदेवानां धाम्नि निवासं, काम्यतमानि च लभन्ते इत्यर्थः)॥

---

१. षि
२. अषख़्याचा

ह्यत् ता उर्वाता सश[1]श्चा ।
या मज़्दाो ददात् मश्याोङ्हो ।
ख़्वीती चा[2] अँनॅइती ह्यत् चा[3] ।
दरॅगॅम् द्रॅग्वोदॅब्यो रशो[4] ।
सवचा अश[5]वब्यो ।
अत् अइपी ताइश् अङ्हइती उश्ता ।। ११ ।।

यत् ता(नि) व्रता(नि) शक्नुथ ।
या(नि) मेधाः दधात् मर्त्यासः ।
*स्वीती च *एनती च यत् च ।
दीर्घम् द्रुघ्वद्भ्यः *रक्षः ।
शवश्च ऋतवद्भ्यः ।
*अत् अपि तैः अस्ति उष्टम् ।। ११ ।।

**मर्त्यासः** हे मनुष्याः **यत्** यदि **तानि व्रतानि** विधानानि **यानि मेधाः** परमेश्वरः **दधात्** अघटयत् **शक्नुथ** बोधथ, (कानि तानि विधानानि इति दर्शयति) ***स्वीती** स्वस्तिः कल्याणमिति **च *एनती** क्षतिः **च**, **यत् द्रुघ्वद्भ्यः** धर्मद्वेषिभ्यः **दीर्घम् *रक्षः** हिंसनं, दण्डभोग इति **ऋतवद्भ्यः** ऋतानुवर्तिभ्यः धार्मिकेभ्यः **च शवः** प्रमोदः ***अत्** ततः **तैः** (अस्य विधानस्य बोधैः) **अपि उष्टम्** वाञ्छितम् **अस्ति** भवति ॥

---

१. ष
२. ख़्वीतिचा
३. ह्यत्चा
४. षो
५. ष

## अहुनवइति गाथा

### हा ३२ सातिः ३२

अख़्या चा[1] ख़्वअेतुश् यासत्।

अह्या वॅरॅज़ॅनॅम् मत् अइर्यम्ना।

अह्या दअेवा महमी मनोइ।

अहुरह्या उर्वाज़ॅमा मज़्दो।

थ़्वोइ दूतोङ्हो ओङ्हामा

तँ ॅग् दारयो योइ वो दइबिषॅ ॅती॥ १॥

अस्य च स्वतवः (अ) याचत्।

अस्य वृजनम् स्मत् अर्यम्णा।

अस्य देवाः *मस्मि माने।

असुरस्य *बर्हमा मेधः।

*त्वे दूतासः असाम।

तान् *धारये ये वः द्विषन्ति॥ १॥

अस्य असुरस्य मेधः परमेश्वरस्य *बर्हमा(णि) आनन्दान् स्वतवः स्वाधीनशक्तिः स्वराट् च अपि अयाचत, अस्य परमेश्वरस्य (आनन्दान्) अर्यम्णा अभिजातेन स्मत् सह वृजनम् साधारणो लोकः (अपि अयाचत), अस्य (आनन्दान्) देवाः (अपि) *मस्मि अस्मिन् (एव) माने परिमाणे (अयाचन्)। सर्व एक लोकः लघोः लघीयान् वा महतो महीयान् वा परमेश्वरस्य आनन्दाय प्रार्थी भवतीति भावः। (हे परमेश्वर ! ये धर्मद्विषिणः वः (युष्मान् असुरमेधादिदेवान्) द्विषन्ति तान् *धारये धर्षितुं (हे परमेश्वर !) *त्वे तव दूतासः दूताः असाम भवाम॥

---

१. अख़्याचा

अएइब्यो मज़्दाो अहुरो।
सारॅम्नो वोहू मनङ्हा।
ख़्शथ्रात्[1] हचा पइती-म्रओत्।
अशा हुश्-हख़्रा ख़्वॅन्वाता।
स्पॅन्ताॅम् वॅ आर्मइतीम्।
वङुहीम् वरॅमइदी हा नॅ अङ्हत्।। २।।

एभ्यः मेधाः असुरः।
श्रयमाणः वसु-मनसा।
क्षत्रात् सचा प्रति-ब्रवत्।
*ऋता*सुसखा *स्वनवता।
श्वेताम् वः अरमतिम्।
वस्वीम् *वरेमहि सा नः असत्।। २।।

**एभ्यः** (पूर्वपद्ये वर्णितेभ्यः याचमानेभ्यः) **वसु-मनसा क्षत्रात् सचा** क्षत्रेण सह **श्रयमाणः** सेव्यमानः **असुरःमेधाः** परमेश्वरः **प्रति ब्रवत्** प्रत्यब्रवीत् "**सुसखा** शोभनसख्ययुक्तेन ***स्वनवता** प्रकाशवता ***ऋता** ऋतेन (सह) **श्वेताम्** शुभ्रां निर्मलां वा **वस्वीम्** कल्याणीं **अरमतिम्** धर्मबुद्धिं **वः** युष्मभ्यम् ***वरेमहि** वृण्वीमहि" (इति); (जरठोष्ट्र-वचनम्) **सा** अरमतिः **नः** अस्मभ्यं **असत्** भूयात्।।

---

१. क्षथ्रात्

अत् यूश् दअेवा वीस्पोङ्हो ।
अकात् मनङ्हो स्ता चिथ्रॅम् ।
यस्चा वो मश् यज़इते ।
द्रूजस्चा पइरिमतोइश्चा ।
श्यओमाँम् अइपी दइबिताना ।
याइश् अस्रूदूम् बूम्यो हप्तइथे[1] ॥ ३ ॥

*अत् यूयम् देवाः विश्वे ।
अघात् मनसः स्थ *चित्रम् ।
यश्च वः महः यजते ।
दुहश्च परि मतेः च ।
च्यौत्ना(नि) अपि *द्विताना(नि)
यैः *आश्रवध्वम् भूम्याः *सप्तथे ॥ ३ ॥

*अत् तथा यूयं विश्वे देवाः यश्च वः युष्मान् महः अत्यर्थम् यजते (सोऽपि) अघात् मनसः (पापसृष्टेरधिदेवताया अघमन्योरागसम्) *चित्रम् अपत्यं स्थ (यूयं सर्वे अघमन्यूपदिष्टमार्गानुसारिणः स्थ इति भावः)। (युष्माकं) *द्वितानानि द्व्यर्थानि कपटपूर्णानि च्यौत्नानि कार्याणि अपि द्रुहः अनृतात् परिमतेः मतिभ्रमात् च (निःसृतानि) यैः कपटाचारैः भूम्याः भूलोकस्य *सप्तत्ये सप्तमे (भागेऽपि) *आश्रवध्वम् कुख्याताः स्थ ॥

---

१. थे

याअत् यूश् ता फ़्रमीमथ़ा[१] ।

या मश्या अचिश्ता दङ्तो ।

वख़्शॅङ्ते[२] दअेवो-ज़ुश्ता ।

वङ्हउश् सीझ़्[३]द्यम्ना मनङ्हो ।

मज़्दाो अहुरह्या ख़्रतउश्

नस्यङ्तो अशा[४]अत् चा ॥ ४ ॥

*यात् यूयं ता(न्) *प्रमीमथ

*या मर्त्याः अचित्ता(नि) दधन्तः ।

वक्ष्यन्ते देव-जुष्टाः ।

वसोः *शिध्यमानाः मनसः ।

मेधः असुरस्य क्रतोः ।

नश्यन्तो ऋतात् च ॥ ४ ॥

*यात् यस्मात् यूयं (अघमन्युवशवर्तिनो देवाः) तान् (स्वोपासकान् जनान्) *प्रमीमथ विपथगामिनः कुरुथ, *या यतः (च) अचित्तानि विवेकरहितानि कार्याणि दधन्तः (दधतः) कुर्वन्तः, वसोः मनसः *शिध्यमानाः विच्युताः मेधः असुरस्य क्रतोः विधानात् ऋतात् च नश्यन्तः परिभ्रष्टाः, मर्त्याः जनाः देव-जुष्टाः देव-प्रियाः वक्ष्यन्ते ॥

---

१. था
२. वक्षङ्ते
३. सीज़्
४. षा

ता दॅबॅनऑता मशी[1]म्।

हुज्यातोइश् अमॅरॅतातस्चा।

ह्यत् वो अका मनङ्हा।

यॅं॑ग् दअेवॅं॑ग् अकस्चा मइन्युश्।

अका श्यऑथ्नॅम् वचङ्हा।

या फ़्रचिनस् द्रॅग्वॅं॑तॅम् ख़्[2]शयो ।। ५ ।।

*ता (अ) दभ्नुत मर्त्यम्।

*सुज्यातेः अमृतेश्च।

यत् वो *अघा मनसा।

यान् देवान् अघश्च मन्युः।

अघा च्यौत्नम् वचसा।

*या प्राचिनोत् द्रुघ्वन्तम् *क्षयः ।। ५ ।।

*ता तेन प्रकारेण देवाः मर्त्यम् मनुष्यं *सुज्यातेः सुजीवनात् अमृतेः अमृतात् अदभ्नुत अवञ्चयन्त, यान् वः युष्मान् देवान् च अघः मन्युः *अघा ( = अघेन) पापपूर्णेन मनसा *अघा ( = अघेन) वचसा (अघं) च्यौत्नम् पापाचारं *या तथा द्रुघ्वन्तम् धर्म-विरुद्धं *क्षयः शासनं (च) प्राचिनोत् विचित्य प्रादात् इत्यर्थः ।।

---

१. षी
२. क्षयो

पौउरू - अएनाो अँनाख़्श्ँता।
याइश् स्रावयँइते येंज़ी ताइश् अथ़ा।
हाता-मराने अहुरा।
वहिश्ता वोइस्ता मनङ्हा।
थ्वहमी व मज़्दा ख़्श्रथ़ोइ।
अशाइ चां सँङ्हो वीदाँम्॥ ६॥

पुरु-एनाः *आनक्षत।
यैः श्रावयते यत् हि तैः अथ।
सतां-स्मरण असुर।
वसिष्ठा(नि) वेत्थ मनसा।
*त्वस्मिन् वै मेधाः क्षत्रे।
ऋते च शास(नः) *वित्ताम्॥ ६॥

पुरु-एनाः भूरि-पापकर्मा (अपि कदाचित्) आनक्षत सफलीभवेत्, अथ यत् तथा यैः हि तैः दुराचारैः (आत्मानं) श्रावयते विख्यातं करोति (तथापि) *सतां-स्मरण सतां स्मारक! असुर! प्रभो! (त्वं) वसिष्ठानि शुभ-कर्माणि मनसा वेत्थ। (हे) मेधाः! *त्वस्मिन् त्वयि, क्षत्रे *ऋते च वै शासनः *वित्ताम् विद्यताम्॥

---

१. क्षता

अएेशाँ[1]म् अएेनङ्हाँम् ।

नएेचीत् वीद्वाो अआेजोइ हाद्रोया ।

या जोया सँङ्हइते ।

याइश् स्त्रावी ख़्वअेना अयङ्हा ।

यअेशाँ[2]म् तू अहुरा ।

इरिख़्तॅम् मज़्दा वअेदिश्तो अही ॥ ७ ॥

एषाम् एनसाम् ।

न चित् विद्वान् *ऊह्ये *सिध्रया ।

या *ज्वया शास्यते ।

यैः *श्रावि *स्वना अयसा ।

येषाम् तु अहुर ।

*रिक्तम् मेधाः वेदिष्ठो असि ॥ ७ ॥

**एषाम् एनसाम्** एनस्वतां पापात्मनां **न** (कोऽपि) **चित्** ***सिध्रया** सत्यशीलया परिपाट्या ***ऊह्ये** (अभिलषितं) प्राप्तुं **विद्वान्** जानाति, ***या** यया (सत्य-परायणया) ***ज्वया** जीवन-रीत्या (धार्मिको जनः) **शास्यते** अनुशिष्टो भवति । **यैः** पापैः ***स्वना** तप्तेन **अयसा** लौहेन (दण्डं भुक्त्वा तदनन्तरमेव) **श्रावि** (सदाचार-रीतिः) श्रुता, गृहीता इत्यर्थः (अघमन्युवशवर्तिनो जनाः ऋजु-मार्गं तदैवानुसरन्ति यदा ते तप्त-लौह-दाहेन दण्डिताः भवन्ति इति भावः) । **येषाम्** एषां पापात्मनां **तु अहुर मेधाः** परमेश्वर ! (त्वमेव) ***रिक्तम्** परिणामं **वेदिष्ठः** ज्ञातुं सर्वाधिकं समर्थः **असि** ॥

---

१. षाँ
२. षाँ

अअेशाँम् अअेनङ्हाँम् ।

वीवङ्हुशो[1] स्नावी यिमस्चीत् ।

यँ मश्यँ ॅग् चिख़्श्[2]नुशो ।

अह्माकँ ॅग् गाउश् बगा ख़्वारॅम्नो ।

अअेशाँम्[3] चीत् आ अह्मी ।

थ़्वह्मी मज़्दा वीचिथ़ोइ अइपी ॥ ८ ॥

एषाम् एनसाम् ।

वैवस्वतो *श्रावि यमश्चित् ।

यः मर्त्यान् *चिक्ष्णुषो ।

अस्माकं गोः भागान् *स्वर्यमाणो ।

एषाम् चित् आ अस्मि ।

*त्वस्मिन् मेधाः विचिते अपि ॥ ८ ॥

एषाम् एनसाम् एनस्वतां (मध्ये) वैवस्वतो यमः चित् *श्रावि विश्रुतोऽभूत् यः मर्त्यान् *चिक्ष्णुषो प्रसादयितुकामः अस्माकं गोः भागान् (मांस)-खण्डान् *स्वर्यमाणः अभोजयत् । मेधाः हे प्रभो ! (अहं) *त्वस्मिन् = तव विचिते निर्णये अपि नूनं एषाम् = एभ्यः एनस्वतेभ्यः चित् आ पृथक् अस्मि भवानि इत्यर्थः ॥

---

१. षो
२. क्ष्
३. षाँम्

दुश्-सस्तिश् स्त्रवो मोरॅ्ंदत् ॥
ह्वो ज्यातँउश् सॅङ्हनाइश् ख्रतूम् ।
अपो मा ईश्तीम् अपयँता ।
बॅरॅख्दाँ[1]म् हाइतीम् वङ्हउश् मनङ्हो ।
ता उख्दा[2] मइन्यँउश् मह्या ।
मज़्दा अशाइ[3] चा यूश्मइब्या गॅरॅज़े ॥ ९ ॥

दुःशास्ता श्रवांसि मृद्नाति ।
*स्वो जीवातो शंसनैः क्रतुम् ।
अप स्म *ईशतिम् *अपायन्त ।
बृढाम् सतीम् वसोः मनसः ।
*ता(नि) उक्था(नि) मन्योः *मस्य ।
मेधाः ऋताय च *युष्मभ्यां गर्हे ॥ ९ ॥

दुःशास्ता दुराचार-शिक्षकः *श्रवांसि शास्त्र-वचनानि मृद्नाति दूषयति । *स्वो सः (स्वकीयैः) शंसनैः शिक्षणैः जीवातोः जीवनस्य क्रतुम् प्रज्ञानं (च दूषयति)। (सः दुःशिक्षकः) वसोः मनसः *ईशतिम् प्रभावं बृढाम् परिवृढां महतीं सतीम् सत्यशीलां स्थितिं (च) अप स्म अत्यधिकं दूरम् अपायन्त अपाकर्तुं चेष्टते इत्यर्थः । *मस्य मम मन्योः मनसः तानि उपर्युक्तानि उक्थानि आलोचनानि (हे) मेधाः (तुभ्यं) (ऋताय) च *युष्मभ्यां युवाभ्यां गर्हे परिदेवे, सविलापं विज्ञापयामि इत्यर्थः ॥

---

१. धा
२. धा
३. षाइ

ह्वो मा ना स्त्रवो मोरॅ्ःदत्।

यँ अचिश्तॅम् वअेनड्हे अओगॅदा।

गाँम् अशि[1]ब्या ह्वरॅचा।

यस्चा दाथॅःग् द्रॅग्वतो ददात्।

यस्चा वास्त्रा वीवापत्।

यस्चा वदरँ वोइझ[2]दत् अशा[3]उने ।। १० ।।

*स्वो स्म ना *श्रवांसि मृद्नाति।

*या अधिष्ठम् *वेनसे औहत।

गाम् अक्षिभ्यां *स्वर् च।

यश्च *धातान् द्रुघ्वतो दधात्।

यश्च *वास्त्रा(णि) व्यवपत्।

यश्च वधर् *(अ) विजधात् ऋतवते ।। १० ।।

स्वो सः ना नरः *श्रवांसि श्रुति-वचनानि मृद्नाति दूष्यति स्म नूनम्, *या यतः गाम् धेनुं *स्वर् सूर्यं च अक्षिभ्यां नेत्राभ्यां वेनसे द्रष्टुम् अधिष्ठम् पापतमं कर्म औहत उपदिशति (गोः सूर्यस्य च दर्शनमपि पापतमं कर्म इत्युपदिशति इति भावः)। यश्च (दुःशास्ता) *धातान् धार्मिकान् जनान् द्रुघ्वतः अघमन्योः (अनुवर्तिनः) दधात् अकरोत् यश्च *वास्त्राणि (गोचारण-भूम्यादीनि गोः) पोषणानि व्यवपत् उदच्छिदत् यश्च *ऋतवते धार्मिके जने वधर् वज्रं *अविजधात् अक्षिपत् ॥

---

१. षि
२. ज़्
३. षा

तअेचीत् मा मोरॅ॰दन् ज्योतूम्।
योइ द्रॅग्वतो मज़िबीश् चिकोइतॅरॅश्।
अङुहीश्चा अङ्ह्वस्चा ।
अपयेइती रअेख़्नॅनङ्हो वअेदॅम्।
योइ वहिश्तात् अशा[1]उनो ।
मज़्दा रारॅश्याँन् मनङ्हो ॥ ११ ॥

ते चित् स्म मृद्नन्ति जीवातुम्।
ये द्रुघ्वतः महीभिः चिचितुः ।
*अस्वीश्च असवश्च ।
अपयच्छति रेक्णसः वेदम्।
ये वसिष्ठात् ऋतवतः ।
मेधाः रारक्षन्ति मनसः ॥ ११ ॥

ते दुराचार-शिक्षकाः **जीवातुम्** जीवन-परिपाटिं **स्म** नूनं **मृद्नन्ति** दूषयन्ति, **ये द्रुघ्वतः** दुर्वृत्तान् अधार्मिकान् जनान् **महीभिः** ऐहिकसमृद्धिभिः (दुर्वृत्तानामैहिकसमृद्धिं दृष्ट्वा तान् पुरुषान् ताश्च स्त्रीः) **अस्वीश्च** ईश्वर्यश्च **असवश्च** ईश्वराश्च (इति) **चिचितुः** मन्यन्ते । (हे) **मेधाः** प्रभो !ये दुर्वृत्तोपदेष्टारः **ऋतवतः** धार्मिकान् जनान् **वसिष्ठात् मनसः** कल्याण-धियः **रारक्षन्ति** विच्युतान् कुर्वन्ति (ते) **रेक्णसः** परमपुरुषार्थस्य **वेदम्** उपलब्धिं **अपयच्छति** (=अपयच्छन्ति) अपनयन्ति ॥

---

१. षा

या रोङ्हयॅन् स्रवङ्हा ।
वहिश्तात् श्यऔथ्नात् मरॅतानो ।
अऐइब्यो मज़्दाो अका म्रऔत् ।
योइ गॅउश् मोरॅ्ंदॅन् उर्वाख़्श्[1] -उख़्ती ज्योतूम् ।
याइश् गह्मा अशा[2]त् वरता ।
करपा ख़्श[3]थ्रॅम्चा ईशनाँम् द्रुजॅम् ॥ १२ ॥

*या (अ) राषिषत श्रवसा ।
वसिष्ठात् च्यौत्नात् मर्त्यान् ।
एभ्यो मेधाः: अघा(नि) ब्रवत् ।
ये गोः मृद्नन्ति *उर्वक्ष-उक्त्या जीवातुम्
*यैः *ग्रस्माः ऋतात् *(अ) वरत ।
*करपाः क्षत्रम् च *ईशानाम् द्रुहम् ॥ १२ ॥

*या यतः (दुर्वृत्तोपदेष्टारः) श्रवसा स्वोपदेशैः मर्त्यान् मनुष्यान् वसिष्ठात् च्यौत्नात् शुभ-कर्मणः अरारिषत निरपास्यन् (अतः) एभ्यः दुःशिक्षकेभ्यः मेधाः प्रभुः अघानि ब्रवत् यच्छति, ये दुर्वृत्ताः *उर्वक्ष-उक्त्या प्रलोभन-वचसा गोः जीवातुम् जीवनम् मृद्नन्ति विनाशयन्ति (ते अधर्मोपदेष्टारः कामानामवाप्त्यर्थं गोः विशसनमुपदिशन्ति, एवञ्च गोः जीवनं विनाशयन्ति) । यैः दुर्वृत्तैः ऋतात् (श्रेष्ठं मत्वा) *ग्रस्माः गो-भक्षकाः *करपाः पुरोहिताः द्रुहम् अघम् *ईशानाम् इच्छतां च क्षत्रम् शासनम् अवरत स्वीकृतमित्यर्थः (अघमन्युवशवर्तिनैरधार्मिकैः ऋतं विहाय गोभक्षकाः पुरोहिताः पापाचारमुपदिशतां च शासनं स्वीकृतम् इति भावः) ॥

---

१. क्ष्
२. षा
३. क्ष

या ख़्श[1]थ्रा गह्मो हीश[2]सत् ।
अचिश्तह्या दॅमाने मनङ्हो ।
अइहँउश् मरॅख़्तारो अह्या ।
यएचा मज़्दा जीगॅरॅज़त् कामे ।
थ्व़ह्या माँथ्रानो दूतीम् ।
यँ ईश् पात् दरॅसात् अश[3]ह्या ।। १३ ।।

या(नि) क्षत्रा(णि) ग्रस्मः सिषासति ।
अघिष्ठस्य दमे मनसः ।
असोः मर्चयितारो अस्य ।
ये च मेधाः (अ) जिगर्हत् कामे ।
*त्वस्य मन्त्रिणो दूत्यम् ।
यः इमान् (अ) पात् धृषात् ऋतस्य ।। १३ ।।

*ग्रस्मः (गो-) भक्षकः अघिष्ठस्य मनसः पापतमस्य चित्तस्य दमे निवासे यानि क्षत्राणि शासनानि सिषासति सेवितुमिच्छति (तानि शासनानि) अस्य दुर्वृत्तस्य असोः अन्तःकरणस्य मर्चयितारः दूषयितारः (भवन्ति)। ये च ते च दुर्वृत्ताः (स्वकीयानां दुर्वृत्तानां दुष्परिणामं भुक्त्वा) मेधाः हे प्रभो ! *त्वस्य तव मन्त्रिणः मन्त्राणां स्तोतुः दूत्यम् शासनं कामे प्रकामं अजिगर्हत् व्याकुलचित्ततया प्रतीक्षन्ते, यः तव स्तोता इमान् अघमन्युवञ्चितान् जनान् ऋतस्य धृषात् धर्षणात् अपात् रक्षयेत् (यः तान् ऋतानुवर्तिनः कुर्यादिति भावः) ।।

---

१. क्ष
२. ष
३. ष

अह्या ग्रह्मो आ-होइश्चोइ ।
नी कावयस्चीत् ख़तूश् नी ददत् ।
वरॅचाही[1] चा फ़्रइदिवा ।
ह्यत् वीसॅं्ता द्रॅग्व ्तॅम् अवो ।
ह्यत् चा गाउश् जइद्याइ म्रओई ।
यॅं दूरओशॅम् सओचयत् अवो ॥ १४ ॥

अस्य *ग्रस्मो आ-सेतवे ।
नि कवयश्चित् क्रतू: नि दधत् ।
वर्चांसि च प्रदिवा ।
यत् *(अ) विशन्त द्रुघ्वन्तम् अव: ।
यत् च गौ: *हनध्यै*ब्रवे ।
*या दूरोषम् अशोचयन् अव: ॥ १४ ॥

[ अस्य जनस्य आ सेतवे प्रलोभनाय *ग्रस्म: पाप्मा (गो-)भक्षक: कवय: कवि-वंशीया: शासका: (असद्धर्मावलम्बिन: जरठोष्ट्रविरोधिनश्च) चित् क्रतू: मतय: वर्चांसि शक्तय: च प्रदिवा पुरातनकालात् निदधत् न्यदधु:, यत् यत: (ते)द्रुघ्वन्तम् अधार्मिकम् धर्मविद्वेषिण: अघमन्योरित्यर्थ: अव: साहाय्यम् रक्षणं वा अविशन्त प्रार्थितवन्त इत्यर्थ: यत् यत: च गौ: *हनध्यै हन्तुं *ब्रवे कल्पिता तै:, *या यत: दूरोषम् प्रकृष्टतमं अव: रक्षणं अशोचयन् अकामयन् ॥ ]

---

१.

अनाइश् आ वी-नँनासा ।

या करपोतोस्चा कॅवीतोस्चा ।

अवाइश् अइबी यँ॰्ग् दइ॰्ती ।

नोइत् ज्यातँउश् ख़्श[1]यम्नँ॰्ग् वसो ।

तोइ आब्या बइयों॰्ते ।

वङ्हँउश् आ दॅमाने मनङ्हो ॥ १५ ॥

*अनैः आ वि-ननाश ।

ये *करपताश्च *कविताश्च ।

एभिः अभि यान् दधन्ति ।

नोइत् जीवातोः क्षयमाणान् *वशः ।

ते आभ्यां भ्रियन्ते ।

वसोः आ दमे मनसः ॥ १५ ॥

[ ***अनैः** ( = एभिः) स्वकीयैः दुराचारैः **ये *करपताः** करपाणां असद्धर्मस्य पुरोहितानां समूहाः **च *कविताः** कविवंशीयानां शासकानां संघाः **च एभिः** तैरेव जनैः **आविननाश** विनाशं प्राप्यन्ते **यान्** जनान् **जीवातोः** जीवनपरिपाटेः **वशः** स्वेच्छानुसारं **क्षयमाणान्** प्रभवतः **नोइत्** नैव **अभि दधन्ति** विदधति (तेऽसद्धर्मानुयायिनः पुरोहिताः शासकाश्च तैरेव जनैः विनाश्यन्ते यान् ते स्वेच्छानुसारं जीवनयापनायावकाशं न ददति स्म इति भावः) । **ते** जनाः **आभ्यां** करप-कविशासकाभ्याम् **वसोः मनसः** कल्याणधियः **दमे** निवासे **आभ्रियन्ते** नीयन्ते ॥ ]

---

-१. -क्ष़

हमम् तत् वहिश्ताचीत् ।
यँ उशुरुये स्यस्चीत् दह्मह्या ।
ख़्श[1]याँस् मज़्दा अहुरा ।
येह्या मा आइथ्रिश्चीत् ।
द्वअेथ़ा ह्यत् अअेनङ्हे द्रॅग्वतो ।
अॅअॅआनू इश्यँ ॅग् अङ्हया ।। १६ ।।

समम् तत् वसिष्ठा चित् ।
*या श्रवे शिस् चित् दस्मस्य ।
क्षियन् मेधाः असुर ।
यस्य मा आधिश्चित् ।
द्वेधा यत् एनसे द्रुघ्वतः ।
अनु इष्यान् असया(मि) ।। १६ ।।

*या यत् **दस्मस्य** मेधाविनः सुशिक्षकस्य **शिस्** अनुशासनं **चित् श्रवे** श्रवणाय **तत् वसिष्ठा** = वसिष्ठेन, कल्याणेन **चित् समम्** (धर्मोपदेष्टुरनुशासनस्य श्रवणं कल्याणाय इति भावः) । **मेधाः असुर** हे परमेश्वर ! त्वं (तस्मिन् अधार्मिकेऽपि) **क्षियन्** प्रभविष्णुः (असि) **यस्य आधिः** द्वेषः **मा** माम् **द्वेधा** द्विधा (भिनत्ति), **यत्** यतः **द्रुघ्वतः** धर्मविद्वेषिणः **एनसे** पापमार्गे **अनु** अनुगन्तुम् **इष्यान्** इच्छुकान् (अधर्मात्) **असयामि** वियोजयामि ॥

---

१. क्ष

## यस्न हप्तङ्हाइति (यज्ञः सप्तसातिः)

### हा ३६ (सातिः ३६)

अह्या थ्वा[1] आथ्रो वॅरॅज़ॅना पओउरुये पइरी-जसामइदे मज़्दा अहुरा थ्वा थ्वा मइन्यू स्पॅनिश्ता यॅं आ अख्तिश् अह्याइ यॅम् अख्तोयोइ दोइ्हे ॥ १ ॥

अस्य त्वा* अथरो *वृजना पूर्वम् परि-*गमामहे मेधाः असुर त्वा त्वा मन्युना *श्वेनिष्ठेन्ल् यो असि क्षतिः अस्मै यम् क्षतये धत्से ॥ १ ॥

[अस्य *अथरो अग्नेः *वृजना = *वृजनेन नैपुण्येन *श्वेनिष्ठेन शुभ्रतमेन मन्युना (प्रेरिताः वयम्) मेधाः असुर परमेश्वर ! त्वा त्वां परि*गमामहे परिगच्छामः यः (त्वम्) अस्मै ईदृशाय जनाय क्षतिः पीडनम् असि यम् क्षतये पीडनाय धत्से दधासि ॥]

उर्वाज़िश्तो ह्वो नो याताया पइति-जम्याो आतरॅ मज़्दो अहुरह्या उर्वाज़िश्तह्या उर्वाज़्या नाँमिश्तह्या नॅमङ्हा नो मज़िश्ताइ योङ्हाँम् पइती-जम्याो ॥ २ ॥

वर्हिष्ठो *स्वो नो *याताय प्रति-गम्यात्*अथर् मेधः वर्हिष्ठस्य असुरस्य *वर्हया नमिष्ठस्य नमसा नो महिष्ठाय *यासम् प्रतिगम्यात् ॥ २ ॥

[वर्हिष्ठः धन्यतमः *स्वो सः मेधः असुरस्य परमेश्वरस्य *अथर् अग्निः *याताय मरणानन्तरं परमेश्वरस्य धाम गमनाय नः अस्मान् प्रतिगम्यात् अनुगृह्णात्वित्यर्थः । (अग्निः) वर्हिष्ठस्य वर्हया सुखेन नमिष्ठस्य नमसा महिष्ठाय *यासम् मरणानन्तरभाविनं परीक्षणं (प्रति गमनाय) नः प्रतिगम्यात् साहाय्यं करोत्वित्यर्थः ॥]

---

१. थ्वा (सर्वत्र एष एव पाठः)

**आतर्श् वोइ मज़्दाो अहुरह्या अही मइन्यॅउश् वोइ अह्या स्पॅनिश्तो अही ह्यत् वा तोइ नामनाँम् वाज़िश्तॅम् आतर॔ मज़्दाो अहुरह्या ता थ्व्रा पइरि-जसामइदे ।। ३ ।।**

अथर् वै मेधः असुरस्य असि, मन्योः वै अस्य*श्वेनिष्ठस्य असि यत् वा ते नाम्नाम् वाहिष्ठम् अथर् मेधः असुरस्य तत् त्वा परि-गमामहे ।। ३ ।।

[यत् वा...असुरस्य = यतः हे अग्ने तव बहुषु नामसु 'असुरस्य मेधः वाहिष्ठम् (=वहनकर्मणि श्रेष्ठम्) अथर्' इत्यप्येकं नामास्ति; तत्...गमामहे = अतः त्वां परिगच्छामः ।।]

**वोहू थ्व्रा मनङ्हा वोहू थ्व्रा अशावङ्हुयाो थ्व्रा चिस्तोइश् श्यओथ्ननाइश्चा वचँवीश्चा पइरी-जसामइदे ।। ४ ।।**

**नॅमख़्यामही इषूइद्यामही थ्व्रा मज़्दा अहुरा । वीस्पाइश् थ्व्रा हुमताइश् वीस्पाइश् हूख़्ताइश् वीस्पाइश् ह्वरश्ताइश् पइरी-जसामइदे ।। ५ ।।**

**स्त्रएंश्ताँम् अत् तोइ कॅहर्पॅम् कॅहर्पाँम् आवएदयमही मज़्दा अहुरा इमा रओचाो बरॅज़िश्तॅम् बरॅज़िमनाँम् अवत् यात् ह्वरॅ अवाची ।। ६ ।।**

वसु(ना) त्वा मनसा वसु(ना) त्वा ऋता (=ऋतेन) वस्व्या त्वा चित्या (=मत्या) च्यौत्नैश्च वचोभिश्च परि-गमामहे ।। ४ ।।

नमस्यामहि (=नमामः) इच्छामहि (=इच्छामः) त्वा मेधाः असुर ! विश्वैः त्वा सुमतैः विश्वैः सूक्तैः विश्वैः सुव्रतैः परि-गमामहे ।। ५ ।।

श्रेष्ठम् अत् ते कृपम् कृपाम् आवेदयामहि मेधाः असुर इमाः रोचाः बर्हिष्ठम् बर्हिम्णाम् अवत् स्वर् अवाचि ।। ६ ।।

[मेधाः असुर ! परमेश्वर ! इमाःरोचाः इमे प्रकाशाः (तथा च) बर्हिम्णाम् महतां बर्हिष्ठम् महिष्ठम् अवत् (ज्योतिः) स्वर् सूर्यः (इति) अवाचि उच्यते (एतानि सर्वाणि ज्योतींषि) ते कृपाम् शरीराणां श्रेष्ठम् कृपम् आवेदयामहि जानीमः ।।]

## हओम यश्त् (यस्न ९)

हावनीम् आ रतूम आ
हओमो उपाइत् ज़रथुश्त्रॅम्
आत्रॅम् पइरि-यओझ़्[1] दथ्रॅं॰ तॅम्
गाथाोस्च स्रावय॰ तॅम्।
आ-दिम् पॅरॅसत् ज़रथुश्त्रो को नरॅ अही
यिम् अज़ॅम् वीस्पहे अङ्हेउश्
अस्त्वतो स्रएश्तॅम् दादरॅस
ख़्वहे गयेहे ख़्वन्वतो अमॅश[2]हे ॥ १ ॥

सावनीम् आ ऋतुम् आ
सोमो उपैत जरठोष्ट्रम्
*अथरम् परि *योस्-दधन्तम्
गाथाश्च श्रावयन्तम्।
आ तम् (अ) पृच्छत् जरठोष्ट्रः को नर असि।
यम् अहम् विश्वस्य असोः
अस्थन्वतः श्रेष्ठम् ददर्श
स्वस्य गयस्य *स्वन्वतो अमृतस्य ॥ १ ॥

[सावनीम् आ रतूम् आ = सवनतौ प्रातः काल इत्यर्थः सोमो अथरम् अग्नि परि-*योस्-दधन्तम् परिचर्यमाणं गाथाश्च श्रावयन्तम् जरठोष्ट्रम् उपैत् उपागमत्। तं सोमं जरठोष्ट्रः आ अपृच्छत् 'को नर असि यम् अहम् जरठोष्ट्रः स्वस्य = स्वेन *स्वन्वतो = *स्वन्वता 'दीप्तिमता' इत्यर्थः अमृतस्य = अमृतेन गयस्य = गयेन जीवनेन इत्यर्थः विश्वस्य असोः प्राणस्य अस्थन्वतः शरीर-धारिणः श्रेष्ठम् ददर्श पश्यामि' इति ॥]

---

१. ज़्
२. ष

आअत् मे अएम[१] पइत्यओख़्त
हओमो अश[२]व दूरओशो[३] ।
अज़ॅम् अह्मि ज़रथुश्त्र
हओमो अशव दूरओशो
आ माँम् यासङ्गुह स्पितम
फ्रमाँम् हुन्वङ्गुह ख़्वरॅतेॲ
अओइ माँम् स्तओमइन स्तूइद्रि[४]
यथ मा अपरचित् सओश्यन्तो स्तवाँन् ।। २ ।।

आत् मे अयम् प्रत्यवोचत्
सोमो ऋतावा दूरोषः ।
अहम् अस्मि जरठोष्ट्र
सोमो ऋतावा दूरोषः
आ माम् याचस्व *श्वितम
प्र माम् सुनुष्व *स्वर्तये
अभि माम् स्तोमनि स्तुधि
यथा माम् अपरे चित् *शोष्यन्तः स्तुवन् ।। २ ।।

[आत् तदनन्तरं ऋतावा ऋतानुवर्ती दूरोषः तेजस्वी सोमो मे अयम् प्रत्यवोचत्, "जरठोष्ट्र ! अहम् ऋतावा दूरोषः सोमो अस्मि, *श्वितम ! *स्वर्तये आनन्दोपभोगाय माम् आ याचस्व, माम् प्र सुनुष्व, माम् स्तोमनि स्तुतौ अभि स्तुधि = स्तुहि यथा माम् अपरे चित् *शोष्यन्तः धर्म-प्रचारकाः स्तुवन् स्तुतवन्तः ॥ ]

---

१. म
२. ष
३. षो
४. धि

आअत् अओख्त ज़रथुश्त्रो नॅमो हओमाइ
कसॅ थ्वाँम् पओइर्यो हओम मश्यो
अस्त्वइथ्याइ हुनूत गअेथ्याइ[1]
का अह्माइ अशिश[2] अॅरॅनावि
चित् अह्माइ जसत् आयप्तॅम् ।। ३ ।।

आत् अवोचत् जरठोष्ट्रः । नमः सोमाय
कस्त्वां पूर्व्यः सोम मर्त्यः
अस्थन्वत्यै (अ) सुनुत *गयत्यै
का अस्मै आशीस् *ऋणावि
चित् अस्मै (अ) गच्छत् आप्तम् ।। ३ ।।

[आत् तदनन्तरम् जरठोष्ट्रः अवोचत्, "नमः सोमाय। सोम! कः पूर्व्यः मर्त्यः त्वाम् अस्थन्वत्यै शरीरधारिणे *गयत्यै जीवलोकाय असुनुत? अस्मै सुन्वते का आशीः *ऋणावि वितीर्णा भवता, चित् किम् अस्मै सुन्वते आप्तम् अभिलषितम् अगच्छत्?" ।।]

---

१. थ्याइ
२. अषिश्

आअत् मे अअेम् पइत्यओख़्त
हआमो अश[१]व दूरआशो[२]-
वीवङ्हो माँम् पओइर्यो मश्यो
अस्त्वइथ्याइ हुनूत गअेथ्याइ
हा अह्माइ अशि[३]श् अॅरॅनावि
तत् अह्माइ जसत् आयप्तॅम्
यत् हे पुथ्रो उस्-ज़यत
यो यिमो ख़्श[४]अेतो ह्वाँथ्वो
ख़्वरॅनङुहस्तॅमो ज़ातनाँम्
ह्वरॅ-दरॅसो मश्यानाँम्।
यत् कॅरॅनओत् अइङ्हे ख़्श[५]थ्राद्[६]
अमरॅ्शॅ्न्त पसु-वीर
अङ्हओशॅम्ने आप-उर्वइरे
ख़्वइर्याँन् ख़्वरॅथॅम् अजयम्नॅम्॥ ४॥

---

१. ष
२. षो
३. षि
४. क्ष
५. क्ष
६. ध

आत् मे अयम् प्रत्यवोचत्
सोमो ऋतावा दूरोष: ।
विवस्वान् माम् पूर्व्यो मर्त्य:
अस्थन्वत्यै (अ) सुनुत *गयत्यै
सा अस्मै आशीस् *ऋणावि
तत् अस्मै (अ) गच्छत् आप्तम्
यत् *से पुत्रो उदजायत
यो यम: क्षियत् सुवन्ता
*स्वरणवत्तमो जातानाम्
स्वर्दृशो मर्त्यानाम् ।
यत् (अ) कृणोत् अस्य क्षत्रादा
अमरिष्यन्ता पशु-वीरा
अशुष्यमाणे अबुर्बरे
*स्वर्तवे *स्वृतम् *अज्यमानम् ॥ ४ ॥

[आत् तदनन्तरं **ऋतावा** ऋतानुवर्ती **दूरोष: सामो मे अयं** प्रत्यवोचत्, "**विवस्वान् पूर्व्यो मर्त्य:** (य:) **माम् अस्थन्वत्यै** शरीरधारिणे ***गयत्यै** जीवलोकाय **असुनुत, अस्मै सा आशी: ऋणावि, अस्मै तत् आप्तम् अगच्छत् यत् *से** तस्य **पुत्रो उदजायत** य: **क्षियत्** शासक: **सुवन्ता** विभूतिसम्पन्न: **यम:** (आसीत्) (यश्च) **जातानाम्** प्राणिनां ***स्वरणवत्तमो** दीप्तिमत्तमो, **मर्त्यानां** (च) **स्वर्दृश:** सूर्य-सदृश:*, **यत्** = य: **अस्य** स्वस्य **क्षत्रादा** (=क्षत्रात् आ) शासनात् आ **पशु-वीरा** पशून् मनुष्यान् च **अमरिष्यन्ता** मरण-रहितान्, **अबुर्बरे** आप: ओषधीन् च **अशुष्यमाणे** शोषणरहितान् **अकृणोत्,** (अस्य शासने) ***स्वर्तवे** भोजनाय ***अज्यमानम्** अक्षीयमाणं ***स्वृतम्** खाद्यम् (च आसीत्) ॥]

यिमहे ख़्श[1] थ़े अउर्वहे
नोइत् अऔतॅम् ओङ्ह नोइत् गरॅमॅम्
नोइत् ज़उर्व ओङ्ह नोइत् मॅरॅश्व्युश्
नोइत् अरस्को दअेवो-दातो ।
पं॒च-दस फ़्रचरोइथ़े
पित पुथ़्रस्च रआदअेश्व[2] कतरस्चित्
यवत ख़्श[3] योइत् ह्वाँथ़्वो
यिमो वीवङुहतो पुथ़्रो ॥ ५ ॥

यमस्य क्षत्रे और्वस्य
नोइत् *ऊधम् आस नोइत् घर्मम्
नोइत् जरा आस नोइत् मृत्युः
नोइत् *अरष्को देवधितः ।
पञ्चदशा प्रचरेते
पिता पुत्रश्च रोधेष्वा कतरश्चित्
यावत् (अ) क्षयत् सुवन्ता
यमो विवस्वतः पुत्रः ॥ ५ ॥

[*और्वस्य तेजस्विनः यमस्य क्षत्रे राज्ये नोइत् नैव *ऊधम् शीतम् आस नोइत् घर्मम् तापः (आस), नोइत् जरा आस नोइत् मृत्युः (आस), नोइत् देवधितः देव-निर्मितः *अरष्कःसंतापः (आस) । यावत् विवस्वतः पुत्रः सुवन्ता यमः अक्षयत् अशिषत् (तावत्) पिता पुत्रश्च कतरश्चित् रोधेष्वा (=रोधेषु आ) आकृतिषु पञ्चदशा (=पञ्चदशौ) पञ्चदशवर्षीयौ (इव प्रतीयमानौ) प्रचरेते ॥]

---

१. क्ष
२. रओधअेष्व
३. क्ष

कसॅ थ्वाँम् बित्यो हओम मश्यो

अस्त्वइथ्याइ हुनूत गऐथ्याइ।

का अह्माइ अशि[1]श् अॅरॅनावि

चित् अह्माइ जसत् आयप्तॅम्॥ ६॥

कस्त्वाम् द्वितीयः सोम मर्त्यः

अस्थन्वत्यै (अ) सुनुत *गयत्यै।

का अस्मै आशीस् *ऋणावि

*चित् अस्मै (अ) गच्छत् आप्तम्॥ ६॥

[सोम! कः द्वितीयः मर्त्यः त्वाम् अस्थन्वत्यै *गयत्यै असुनुत? अस्मै का आशीस् *ऋणावि दत्ता त्वया, अस्मै चित् किम् आप्तम् अभिलषितम् अगच्छत् ?]

---

१. षि

आत्[१] मे अअेम् पइत्यऔख़्त
हऔमो अश[२]व दूरआशो[३] ।
आथ़्व्यो माँम् बित्यो मश्यो
अस्त्वइश्याइ हुनूत गअेश्याइ ।
हा अह्माइ अशि[४]श् अ‍ॅरॅनावि
तत् अह्माइ जसत् आयप्तॅम्
यत् हे पुथ़्रो उस्-ज़यत
वीसो सूरयाो थ्र[५]अेतऔनो ॥ ७ ॥

आत् मे अयम् प्रत्यवोचत्
सोमो ऋतावा दूरोषः ।
आप्त्यो माम् द्वितीयो मर्त्यो
अस्थन्वत्यै (अ) सुनुत *गयत्यै ।
सा अस्मै आशीस् *ऋणावि
तत् अस्मै (अ) गच्छत् आप्तम्
यत् *से पुत्रः उद्जायत
विशः शूरायाः चैतानः ॥ ७ ॥

[शूरायाः विशः = विक्रान्तस्य कुलस्य ॥]

---

१. आअत्
२. ष
३. षो
४. षि
५. थ्र

यो जनत् अझ़ी[1]म् दहाकॅम्
थ़्रि[2]ज़फ़नॅम् थ्रिकमॅरॅद्र[3]म्
ख़्व[4]श्-अशी[5]म् हज़ङ्र-यओख़्श[6]तीम्
अशओजङ्हॅम् दएवीम् द्रुजॅम्
अग़[7]म् गएथ़ा[8]व्यो द्रवङ्तॅम्
याँम् अशओजस्तॅमाँम् द्रुजॅम्
फ़्रच कॅरॅङ्तत् अङ्रो मइन्युश्
अओइ याँम् अस्त्वइतीम् गएथाँम्
मह्रकाइ अश[9]हे गएथ़[10]नाँम्॥ ८॥

---

१. ज़ी
२. थ्रि (सर्वत्र)
३. ध
४. क्ष्व
५. षी
६. क्ष
७. घॅ
८. था (सर्वत्र)
९. ष
१०. थ (सर्वत्र)

यो (अ) हनत् अहिम् दंशकम्
त्रिजम्भनम् त्रिकुमूर्धानम्
षडक्षम् सहस्त्रयुक्तिम् ।
अत्योजसम् दैवीम् द्रुहम्
अघम् *गयताभ्यः द्रवन्तम्
यम् अत्योजस्तमम् द्रुहम्
प्राक् (अ) कृन्तत् अघो मन्युः
अभि यम् अस्थन्वतीम् *गयताम्
मृचे ऋतस्य *गयतानाम् ।। ८ ।।

यः त्रैतानः त्रिजम्भनम् त्रिवक्त्रं त्रिकमूर्धानम् त्रिभिः कुरूपैः शिरोभिः संयुक्तं षडक्षम् सहस्त्र-युक्तिम् भूरिमायं अत्योजसम् अतिबलवन्तं दैवीम् = दैवम् पैशाचिकं द्रुहम् धर्म-द्रोहिणं *गयताभ्यः जीवेभ्यः अघम् पापं (धर्मात्) द्रवन्तम् दंशकम् अहिम् अहनत्, यम् अत्योजस्तमम् बलिष्ठं द्रुहम् अघोमन्युः पापसृष्टेरधिदेवता प्राक्-अकृन्तत् निर्मितवान्, यम् (द्रुहम्) ऋतस्य *गयतानाम् जीवानां, धार्मिकाणां प्राणिनामित्यर्थः मृचे विनाशाय अस्थन्वतीम् शरीरधारिणं *गयताम् जीवलोकं (च विनाशयितुम् अघमन्युः) अभि (अकृन्तत्) ।।

कसॅ श्न्नाँम् थ्रित्यो हऔम मश्यो
अस्त्वइश्ख्याइ हुनूत गअेश्ख्याइ।
का अह्माइ अशिस्[१] अॅरॅनावि
चित् अह्माइ जसत् आयप्तॅम्।। ९।।

कस्त्वाम् तृतीयः सोम मर्त्यः
अस्थन्वत्यै (अ) सुनुत *गयत्यै।
का अस्मै आशीस् *ऋणावि
चित् अस्मै (अ) गच्छत् आप्तम्।। ९।।

आत्[२] मे अअेम् पइत्यओख़्त
हऔमो अश[३]व दूरऔशो[४]।
थ्रितो सामनाँम् सॅविश्तो थ्रित्यो माँम् मश्यो
अस्त्वइश्ख्याइ हुनूत गअेश्ख्याइ।
हा अह्माइ अशिश्[५] अॅरॅनावि
तत् अह्माइ जसत् आयप्तॅम्
यत् हे पुथ्र उस्-ज़योइर्थे
उर्वाख़्श[६]यो कॅरॅसास्पस्च।
त[७]कअेशो अन्यो दातो-राज़ो
आअत् अन्यो उपरो-कइर्यो
यव गअेसुश् गद्[८]वरो।। १०।।

---

१. षिश्
२. आअत्
३. षिश्
४. षो
५. अषिश्
६. क्ष
७. ट
८. ध

आत् मे अयम् प्रत्यवोचत्
सोमो ऋतावा दूरोषः ।
त्रितः सामानाम् शविष्ठः तृतीयो माम् मर्त्यः
अस्थन्वत्यै (अ) सुनुत *गयत्यै ।
सा अस्मै आशीस् *ऋणावि
चित् अस्मै (अ) गच्छत् आप्तम्
यत् *से पुत्रौ उदजायेते
उर्वाक्षः कृशाश्वश्च ।
(अ) तिचक्षा अन्यो *धात-राजः
आत् अन्यः *उपरि-कार्यः
युवा केशी गदाभरः ॥ १० ॥

[.....शविष्ठः = बलिष्ठः ।.....अन्यो उर्वाक्ष-कृशाश्वयोरेकः उर्वाक्षः **अतिचक्षा** चिकेता ***धातराजः** धर्म-विधायकः **आत्** तथा **अन्यः कृशाश्वः *उपरि-कार्यः** महतां कार्याणां कर्ता **केशी गदाभरः** गदाधरः (आसीत्) ॥]

यो जनत् अझी[1]म् स्त्रवरॅम्
यिम् अस्पो-गरॅम् नॅरॅ-गरॅम्
यिम् वीश[2]व॒तॅम् ज़इरितॅम्
यिम् उपइरि वीश् अरऑद्व[3]त्
आर्श्त्यो-बरॅज़ ज़इरितॅम् ।
यिम् उपइरि कॅरॅसास्पो
अयङ्ह पितूम् पचत
आ रपिथ्विनॅम् ज़्रवानॅम् ।
तफ़्सत् च[4] हो मइर्यो ख़्वीसत् च[5] ।

१. ज़ी
२. ष
३. ध
४. तफ्सत्च
५. ख़्वीसत्च

**फ़ाँश् अयङ्हो फ़स्परत्**
**यअेश्य ̃ तीम् आपॅम् परोङ्हात्।**
**पराँश् तर्श्तो अपतचत्**
**नइरे-मनो कॅरॅसास्पो॥ ११॥**

**यो (अ) हनत् अहिम् शृङ्गभरम्**
**यम् अश्व-गरम्, नृ-गरम्**
**यम् विषवन्तम् हरितम्**
**यम् उपरि विषम् अरोहत्**
***ऋष्टि-बर्हः हरितम्।**
**यम् उपरि कृशाश्वो**
**अयसा पितुम् (अ) पचत**
**आ *रवित्वनम् त्रयाणम्।**
**(अ) तपत् च सः मर्यः (अ) स्विदत् च**
**प्राक् अयसः प्रास्फुरत्**
**यस्यन्तीः अपः परास्यत्।**
**प्राङ् त्रस्तो अपातकीत्**
**नरमनाः कृशाश्वः॥ ११॥**

[यः कृशाश्वः **शृङ्गभरम्** शृङ्गधारिणम् **यम्** तमित्यर्थः **अश्व-गरम्** अश्वानां निगरितारं **नृ-गरम्** नराणां ग्रसितारं **यम्** तमित्यर्थः **विषवन्तम्** (अतश्च) **हरितम्** हरिद्वर्णम् **अहिम् अहनत् यम्** = यस्य **अहेः उपरि हरितम् विषम्** ***ऋष्टि-बर्हः** ऋष्टि-परिमितम् तुङ्गम् **अरोहत्**, **यम्** = यस्य **उपरि कृशाश्वः** ***रवित्वनम्** मध्याह्नं **त्रयाणम्** समयम् **आ** मध्याह्नसमये इत्यर्थः **अयसा** लौहपात्रेण **पितुम्** भोजनम् **अपचत्** (विशालं तमहिं शिलाखण्डं मत्वा कृशाश्वः तस्योपरि अग्निं प्रज्वाल्य लौहपात्रेण भोजनं पक्तुमारब्धः इत्यर्थः)। (अग्नितापेन) **च सः मर्यः** सर्पः **अतपत् अस्विदत्** च, **अयसः** लौहपात्रस्य **प्राक्** अधस्तात् **प्रास्फुरत्** परासृपत् (लौहपात्रे) **यस्यन्तीः** क्वथन्तीः **अपः परास्यत्**। (तेन च) **त्रस्तः** भीतः **नरमनाः** शूरः **कृशाश्वः** प्राङ् **अपातकीत्** अधावीत्॥]

# टिप्पण्यः

## अहुन वइर्य = सं. असुः वर्यः

यथ्ना– सं. यथा। 'ख्, थ्, फ्' इत्येतेऽघोषमहाप्राणा अवेस्तायां संघर्षि-व्यञ्जनवदुच्चार्यन्ते, अतश्चात्र 'ख़्, थ़्, फ़्' इत्येवमधः बिन्दु-सन्निवेशेन प्रदर्शिताः।

अहू– सं. असुः। सं. स् = अवे. ह्। अवेस्तायां संगृहीतासु गाथासु गाथाभ्योऽपि प्राचीनतरेषु च मन्त्रेषु पदान्तस्वरः द्राघित उपलभ्यते। अवेस्तायां 'अहु, अङ्हु' इति द्विधा 'असु' शब्द-विकारः। प्राणवाचकः 'असु' शब्दोऽत्र 'सर्वेश्वरः' इत्यर्थे प्रयुक्तः।

वइर्यो– सं. वर्यः। सं. -अः = अवे.–ओ। पदमध्ये इकार-उकारागमोऽवेस्तायाः वैशिष्ट्यम्।

अथ्ना– सं. अथ। पदान्त-स्वरः द्राघितः। 'तथा' इत्यर्थः।

रतुश्– सं. ऋतुः। 'ऋत-' शब्देन सम्बद्धोऽयं शब्दः 'धर्मोपदेष्टा, धर्मनियामको वा' इत्यर्थं ज्ञापयति।

अशात्– सं. ऋतात्। हेत्वर्थे पञ्चमी।

चीत्– सं. चित्।

हचा– सं. सचा। ऋक्संहितायां 'सचा' इति निपातः 'सह' इत्यर्थे प्रयुक्तो लभ्यते, यथा- ऋसं. १.५.२, १.७.२., १.९.३ इत्यादिषु बहुषु स्थलेषु। अवेस्तायां तु 'हचा' इत्यस्य 'कारणात्' इत्यर्थे प्रयोगः।

**वङ्हॅउश....मनङ्हो**– सं. **वसोः** मनसः। सकारः अवेस्तायां हकार-रूपेण 'ङ्ह' इति रूपेण वा विपरिणमति। अतः सं. '**वसु**' = अवे. **वोहु, वङ्हु** वा। अवेस्तायां कल्याणकारिण्याः धियोऽभि-मानिनी देवता '**वोहु मनो**' ऋतानुवर्तिनां परमं शरणम्।

**दज़्दा**– अवे. '**दज़्दर्**' इत्यस्य प्रथमैकवचनम्। अवेस्तायाः '**-ज़्द्**' इत्यस्य स्थाने संस्कृते '**-ध**' इति लभ्यते, यथा– अवे. "**मज़्दा**' = सं. '**मेधा,** अवे. **थ्रज़्दूम्**' = सं. **त्रायध्वम्**। अतश्च अवेस्तायाः 'दज़्दर्' इत्यस्य संस्कृते 'दाधर्, दाधृ वा' रूपं कल्पयितुं शक्यते। 'दाधृ-' शब्दस्तु प्रयोगे नोपलभ्यते। तथापि ऋक्संहितायां (६.६६.३) 'दाधृविः' शब्दः 'धरित्री' इत्यर्थे प्रयुक्तः। अतः अवे. दज़्दा = सं. *दाधा शब्दः 'दानम्' इत्यर्थेऽनुमीयते।

**श्यओथ्ननाँम्**– अवे. **श्य्** = सं. **च्य्**, अवे. **अओ** = सं. **औ**। सं (वै.) **च्यौत्नानाम्**। विभक्ति-व्यत्ययेन चतुर्थ्याः स्थाने षष्ठी प्रयुक्ता। '**च्यौत्नेभ्यः**' कार्येभ्यः इत्यर्थः। अस्मिन्नेवार्थे 'च्यौत्न' शब्दः ऋक्संहितायां, यथा–'ता कर्माषतरास्मै प्र च्यौत्नानि देवयन्तो भरन्ते' (१.१७३.४) अत्र द्रष्टव्यः।

**अङ्हॅउश्**– अवे. 'अङ्हु' (= सं. **असु**-) इत्यस्य षष्ठ्येकवचनम्। सं. **असोः**। 'प्राणात्मकस्य जीवलोकस्य' इत्यर्थः।

**मज़्दाइ**– अवे. 'मज़्दा' (= सं. **मेधा**-) इत्यस्य चतुर्थ्येकवचनम्।

**ख़्शथ्रम्**– अवे. **ख़्श्** = सं. **क्ष्**, अवे. थ्र् = सं. त्र्।
**चा**– सं. **च**। पदान्त-स्वरः द्राघितः।

**अहुराइ**– अवे. 'अहुर' (=सं. **असुर**-) इत्यस्य चतुर्थ्येकवचनम्। षष्ठीस्थाने चतुर्थी। 'असुरस्य' इत्यर्थः।

**यिम्-** सं. **यम्**। अवेस्तायां यकारादिपदेषु प्राय: यकारात् पूर्वमिकार-सन्निवेश: क्रियते, अतएव 'यम:' इत्यस्य अवेस्तायां 'यिमो' इति रूपम्।

**द्रिगुब्यो-** अवेस्तायां 'घ्, ध्, भ्' इत्येषां सघोष-महाप्राणानां स्थाने 'ग्, द्, ब्' इत्येते सघोषाल्पप्राणा: लभ्यन्ते। अत: संस्कृते 'ध्रिगुभ्य:' इति रूपम्। ऋक्संहितायां –६.४५.२०, ८. ७०.१, ८.९३.११– एषु स्थलेषु **'अध्रिगु-'** शब्द: **'समृद्ध'** इत्यर्थे प्रयुक्तो लभ्यते। अतश्च **'ध्रिगु:'** इत्यस्य 'निर्धन:' इत्यर्थोऽनुमीयते।

**ददत्-** सं. (वै.) **दधत्**, (लौ.) **दधाति**।

**वास्तारॅम्-** सं. **वास्तारम्**। रक्षकम्, पालकम् वा।

■

## अशॅम् वोहू = सं. ऋतम् वसु

**वहिश्तॅम्**– अवे. **वोहु** (= सं. वसु) +- **इश्त**- (= सं.- इष्ठन्)। सं. वसिष्ठम्। कल्याणतममित्यर्थः।

**उश्ता**– अवे. **उश्**- (=सं. **वश्**-) + तर् (= सं. तृच्)। सं. (वै.) उष्टा। अवे.. **उश्तर्** (=सं. (वै.) **उष्टृ**-) शब्दस्य प्रथमैकवचनम् ऋक्संहितायां 'उष्टा' शब्द-प्रयोगो यथा 'उष्टाराविव फर्वरिषु श्रयेथे' (१०.१०६.२) इत्यत्र– (अश्विनौ) **उष्टाराविव** प्रकाशकाविव–इत्यर्थः।

**अह्माइ**– सं. **अस्मै**। अवे. **-आइ** = सं. **-ऐ**।

**येङ्हे हातॉम् = सं. यस्य सताम्**

**येङ्हे**– 'यत्' सर्वनाम्नः षष्ठ्येकवचनम्। गाथासु 'येह्या' इति रूपम्। 'येङ्हे' इति रूपं तु गाथाभ्यः परवर्तिन्यां भाषायाम्।

**हातॉम्**– अवे. **अह्**(=सं. **अस्**- 'भुवि') धातोः शतरि षष्ठी बहुवचनम्। सं. **सताम्**।

**आअत्**– सं '**आत्**'।

**येस्ने**– अवे. **यज़्** (=सं. यज् -) + **-न**।, सप्तम्येकवचनम्। सं. **यज्ञे**।

**पइती**– सं. **प्रति**। पदान्त-स्वरः द्राघितः।

**वङ्हो**– सं. **वस्यः** (= वसीयः)। **वस्** - + **ईयस्**। 'वसीयः' इत्यस्य अवेस्तायां वर्ण-विकारानुरूपं '**वङ्हीयो**' इति रूपं सिद्ध्यति, तत्र पुनः अक्षरलोपे ***वङ्ह्यो** > **वङ्हो** इति रूपम्। 'वसीयः' इत्यस्य अवेस्तायां '**वह्यो**' इत्यपि रूपं केषुचित् स्थलेषूपलभ्यते।

**यज़मइदे**– यज़्-धातोरात्मनेपदिनः लटि उत्तमपुरुष-बहुवचनम्। सं. **यजामहे**।

# अहुनवइति गाथा सं. असुमती गाथा

## हा २९

### १.

**ख़्श्मइब्या**– मध्यम-पुरुष-सर्वनाम्नः चतुर्थ्यां बहुवचनम्। सं. 'युष्म'- इत्यस्य स्थाने **'ख़्श्म-'** इति गाथास्वेव, अन्यत्र तु **'यूश्म-'** इत्येव, यथा चतुर्थ्यां बहुवचने **'यूश्मओयो'** इति रूपं गाथा-व्यतिरिक्तेषु भागेषु प्रयुक्तो दृश्यते।

**उर्वा**– अवे. 'उर्वन्' इत्यस्य प्रथमैकवचनम्। संस्कृते 'उर्वन्' शब्दो नोपलभ्यते। अवे. **वर्-** (= सं. वृ-) धातोः निष्पन्नोऽयं शब्दः 'आत्मा' वाचकः। संस्कृत उरुशब्देन सम्बद्धोऽयं शब्दः आत्मनो वाचकः तस्य व्यापनशीलत्वात्।

**गॅरॅज़्दा**– अवे. गॅरॅज़् (= सं. **गर्ह्** = 'निन्दायाम्') इत्यात्मनेपदिधातोः लङि अन्यपुरुषैकवचनम्। सं. **अगर्हत**। अवेस्तायां लङि अडागमः वैकल्पिकः। पदान्त-स्वरो द्राघितः।

**कह्माइ**– सं. **कस्मै**। पञ्चम्यर्थे चतुर्थी। कस्मात् प्रयोजनात् इत्यर्थः।

**थ्वरोझ़दूम्**– अवे. थ्वरॅश्- (= सं. त्वक्ष् = ) इत्यात्मनेपदिधातोः लुङि मध्यमपुरुष-बहुवचनम्। अडागमाभावः। सं. **अत्वक्षध्वम्**।

**कॅं**– सं. **कः**। प्रथमैकवचने 'कॅं' इति रूपं गाथास्वेव लभ्यते। अन्यत्र तु **'को'** इति रूपम्।

**तशत्**– अवे. **तश्-** (= सं. **तक्ष्-**) इति परस्मैपदि-धातोः लङि अन्यपुरुषैकवचनम्। अडागमाभावः। सं. **अतक्षत्**।

**अएॅशॅमो**– अवे. इश्-, अऎश् (= सं. **इष्** = 'इच्छायाम्') + -म-। संस्कृते ***एष्मः** इति रूपं कल्पयितुं शक्यते। कामजनितः क्रोध इत्यर्थः।

**हज़स्**– सं. (वै.) **सहः**। शक्तिरित्यर्थः। अस्मिन्नेवार्थे ऋक्संहितायां 'सहस्' शब्दः, यथा 'न हि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः (१.२४.६) इत्यत्र।

**रॅमो**– सं. *रमः। पशुहरणमित्यर्थः।

**आहिशाया**– सं. (वै.) **आसिषाय**। **आ**- (उपसर्गः) + अवे. **हि** (= सं. = (वै.) **सि**-) परस्मैपदिधातोः लिटि अन्यपुरुषैकवचनम्। ऋक्संहितायां 'सुपर्ण इत्था नखमासिषायावरुद्धः परिपदं न सिंहः' (१०.२८.१०) इत्यत्र 'आसिषाय' इत्यस्य 'आबबन्ध' इत्यर्थः।

**दअेवीम्**– सं. **दैवीम्** = **दैवम्**, देवसम्बन्धिनमित्यर्थः। अत्र 'देव' शब्दः अपदेवराक्षसस्य पिशाचस्य वा वाचकः। जरठोष्ट्रस्य धार्मिकान्दोलनं यज्ञेषु पशुबलेः विरोधाय आसीत्। जरठोष्ट्रः देवान् निनिन्द यतस्तेभ्यः (देवेभ्यः) पशुबलिः दीयते स्म। फलतः जरठोष्ट्रस्य अनुयायिनां मते देवः घृणापात्रं जातम्। देवशब्दोऽपि राक्षसपर्यायो जातः। अवेस्तायाः ये अंशाः जरठोष्ट्रानन्तरं रचिताः तेषु देवशब्दः अस्मिन्नेव हीनार्थे प्रयुक्तः।

**दॅरॅश्**– सं. ***धृष्**- (= धृष्टिः)। अवे. **अॅरॅ** = सं. **ऋ**।

**तॅविश्**– सं **तविष्**। शक्तिरित्यर्थः। ऋक्संहितायां यथा– 'अहं ह्युग्रस्तविषस्तुविष्मान्' (१.१६५.६) इत्यत्र।

**ख़्श्मत्**– सं. **युष्मत्**। अवे. **ख़्श्म** = सं. **युष्म**-।

२.

**अदा**– सं. (वै.) **अध**। पदान्त-स्वरो द्राघितः। अनन्तरमित्यर्थः। ऋक्संहितायाम् 'अध' शब्दो, यथा–'**अध**' स्वनान्मरुतां विश्वमा

सद्म पार्थिवम्' (१.३८.१०) इत्यत्रापि 'अध' शब्द आनन्तर्यवाचकः ।

तशा– सं. (वै.) **तक्षा**। अवे. **तशन्** (= सं. **तक्षन्**) प्रातिपदिकस्य प्रथमैकवचनम्। 'घटयिता' इत्यर्थः। ऋक्संहितायां 'तक्षा' शब्दो. यथा–'**तक्षा** रिष्टं रुतं भिषग्ब्रह्मा सुन्वन्तमिच्छति' (९.११२.१) इत्यत्र ।

पॅरॅसत्– सं. **अपृच्छत्**। अवे. **पॅरॅस्** (= सं. पृच्छ-) परस्मैपदिधातोः लङि प्रथमपुरुषैकवचनम्। अवेस्तायां लङि अडागमविकल्पः।

अशॅम्– सं. **ऋतम्**। 'अमेशस्पेन्ता' नामकेषु देवेषु प्राथम्यात् ऋतमेव प्रथमं पृच्छति गोः तक्षा परमेश्वरः 'अहुरो मज़्दा'।

कथ्रा– सं. (वै.) **कथा**। कथमित्यर्थः। ऋक्संहितायां कथमित्यर्थे 'कथा' शब्दो, यथा-'**कथा** राधाम सखायस्तोमं मित्रस्यार्यम्णः' (१.४१.७) इत्यत्र ।

तोइ– सं. ते। तदित्यस्य षष्ठ्येकवचनम्। सं. ए = अवे. **ओइ** **अए, अे** वा।

गवोइ– सं. **गवे**। गवार्थमित्यर्थः।

हीम्– सं. (वै.) **सीम्**। 'एनाम्' इत्यर्थः। 'तद् इति सर्वनामशब्दस्य पर्यायः सर्वनामैतत् अवेस्तायां वेदे च त्रिषु लिङ्गेषु प्रयुज्यते।

दाता– सं. (वै.) **धात, (लौ.) धत्त**। अवे. **दा-** (= सं. **धा–**) धातोः लोटि मध्यमपुरुष बहुवचनम्। बहुवचनेनात्र ऋतेन सह अन्येऽपि देवाः विवक्षिताः।

ख़्शयन्तो– सं. **क्षयन्तः** = **क्षयन्**। अवे. **ख़्शि**– (= सं. **क्षि-**) धातोः शतरि प्रथमैकवचनम्।

**हदा**– सं. (वै.) **सध**, (लौ.) **सह**।

**गओदायो**– सं. (वै.) **गोधायसम्**। अवे. **'गओदायह्'** (= सं. **गोधायस्**) इति नपुंसकलिङ्गि-प्रातिपदिकस्य द्वितीयैकवचनम्। गवां धारकं पालकम् इत्यर्थः। अस्मिन्नेवार्थे ऋक्संहितायां, यथा–'स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं विधनसैरदर्दः' (१०.६७.७) इत्यत्र।

**श्वख्शो**– सं. (वै.) **त्वक्षः**। अवे. **श्वख्शह्** - (= सं. (वै.) **त्वक्षस्**-) इत्यस्य नपुंसकलिङ्गिप्रातिपदिकस्य द्वितीयैकवचनम्। बलवन्तमित्यर्थः। अस्मिन्नेवार्थे ऋक्संहितायां, यथा– 'यत्रा नरो देदिशते तनूष्वा **त्वक्षांसि** बाह्वोजसः' (८.२०.६) इत्यत्र।

**होइ**– सं. **अस्याः**।

**उश्ता**– सं. **उष्ठ**। अवे. **वस्** (= सं. **वश्** 'कान्तौ') धातोः लटि मध्यमपुरुष-बहुवचनम्। 'कामयथ' इत्यर्थः।

**अहुरम्**– सं. **असुरम्**। प्रभुमित्यर्थः।

**द्रग्वोदॅबीश्**– सं. (वै.) **द्रुघ्वद्भिः**, (लौ.) **द्रुह्वद्भिः**। अवे. **द्रॅग्वन्त्** (= सं. (वै.) **द्रुघ्वत्**, (लौ.) **द्रुह्वत्**) इत्यस्य तृतीयायां बहुवचनम्। अवेस्तायां पापसृष्टेरधिदेवतायाः अघमन्योः (अवे. आङ्रो मइन्युश्) अनुगामिनः अधार्मिकाः असत्यशीलाश्च जनाः 'द्रॅग्वन्त्' पद-वाच्याः।

**वादायोइत्**– सं. **बाधयेत्**। अवे. **वादाय्** (= सं. **बाध्**-) धातोः लिङि प्रथमपुरुषैकवचनम्। अवेस्तायां बकारस्थाने बहुधा वकारः।

## ३.

**अशा**– सं. **ऋतम्**। प्रथमैकवचनम्। नियमतः प्रथमैकवचने 'अशॅम' इति रूपं भवति, किन्तु अनेकेषु स्थलेषु नपुंसकलिङ्ग

प्रातिपदिकस्य प्रथमैकवचने पदान्तमकारलोपो दृश्यते, यथात्रापि। पदान्त-स्वरः द्राघितः।

**सरॅजा**– सं. ***सृजा** (= *सृजम्)। क्रूरमित्यर्थः।

**ब्रवत्**– सं. (वै.) **ब्रवत्**, (लौ.) **अब्रवीत्**। अवे. म्रू- (= सं. ब्रू-) धातोः लङि प्रथमपुरुषैकवचनम्।

**अवअेशाँम्**– सं. ***अवेषाम्** (=**अमीषाम्**)। अवे. 'अव-' इत्यस्य षष्ठी-बहुवचनम्। अवेस्तायां '**अव-**' सर्वनाम विप्रकृष्टार्थे प्रयुज्यते।

**वीदुये**– सं. ***विदुये**। अवे. **विद्**- (= सं. **विद्**-) धातोः तुमुन्नर्थकः चतुर्थ्यन्तप्रयोगः। वेदितुं (लभ्यते), ज्ञायते इत्यर्थः।

**शवइते**– सं. **च्यवते**। अवे. **श्यव्**- (= सं. **च्यव्**- ) धातोः लटि प्रथमपुरुषैकवचनम्।

**अद्रॅंङ्ग्**– आ (उपसर्गः) + द्र-प्रातिपदिकस्य द्वितीयायां बहुवचनम्। द्रातीति द्रः। अत्र धर्मात् द्राति विमुखो भवति' इति 'धर्मविमुखः' इत्यर्थे 'द्र'– शब्दः।

**अॅरॅश्वोड्ह्रो**–सं. (वै.) **ऋष्वसः**। अवे. **अॅरॅश्वह्** (=सं. वै.) **ऋष्वस्**-) प्रातिपादिकस्य पञ्चम्येकवचनम्। निघण्टौ ऋष्वः महन्नामसु पठितः (निघुण्टु ३.३)। ऋक्संहितायां पूज्य इत्यर्थेऽपि प्रयुक्तः। अत्र तु धार्मिकः ऋतानुवर्तीत्यर्थः।

**ज़वॅंङ्ग्**– सं. **ह्वान्**। अवे. **ज़व**- (= सं. **हव**-) प्रातिपदिकस्य द्वितीयायां बहुवचनम्। अवे. **ज़ु**- (=सं. **हु**- 'आह्वाने') धातोः निष्पन्नोऽयं शब्दः।

**जिमा**– अवे. गम्- (= सं. गम्-) धातोः लोटि उत्तमपुरुष-बहुवचनम्। सं. गमाम।

**कॅरॅदुशा**– सं. (वै.) ***कृधुषा** (= **कृधुषा**)। ऋक्संहितायां (४.५.१४) '**कृधुना**' इत्यस्य '**ह्रस्वेन**' इत्यर्थः। अत्र तु क्षिप्रगत्या, त्वरया इत्यर्थः।

## ४.

**सख़्वारॅं**– सं. **सस्वरा(णि)** । अवे. **ख़्व** = सं. **स्व**।

**मइरिश्तो**– सं. ***स्मरिष्ठः**। अवे. **मर्**- (= सं. **स्मृ**- 'स्मरणे') धातोः '**मइर-**' (= सं. **स्मर-**; 'स्मरतीति') + इश्त- (= सं. - इष्ठन्) प्रत्यये निष्पन्नः।

**वावॅरॅज़ोइ**– अवे. **वरॅज़्** (= सं. **वृज्**-) आत्मनेपदिधातोः लिटि प्रथम-पुरुषैकवचनम्। सं. (वै.) **वावृजे**।

**दअेवाइश्**– सं. **देवैः**। अवेस्तायाः 'वेन्दिदाद' आदिषु परवर्तिषु प्रकरणेषु 'दअेव' (= सं. **देव**-) शब्दः हीनार्थको दैत्यवाची, किन्तु गाथासु न तथा। तत्र तु 'संस्कृतवत् 'दअेव' शब्दः द्योतनशीलानां भगवतामेवाभिधानम्।

**मश्याइश्**– सं. **मर्त्यैः**। यथा '**ऋत**'- शब्दस्य अवेस्तायां '**अश-**' इति रूपं, तथात्राऽपि **अर्त्**- इत्यस्य '**अश्**' इति विकारे **मर्त्य**- शब्दस्य '**मश्य**'- इति रूपमवेस्तायाम्।

**वरॅशइते**– अवे. **वरॅज़्**- (= सं. **वृज्**-) धातोः भविष्यति कर्मणि रूपम्। सं. वर्क्ष्यते।

## ५.

**अह्वा**– अवे. **अह**- (= सं. **अस्**-) धातोः लङि उत्तमपुरुष-द्विवचनम्। अर्थतस्तु वर्तमानकालिकोऽर्थः ग्रहीतव्यः।

**फ़्रीनॅम्ना–** अवे. **फ़्री** (= सं. **प्री-**) आत्मनेपदी- धातोः शानचि प्रथमायां द्विवचनम् । सं. **प्रीणयमानौ** ।

**अज़्यो–** अवे. **अज़्** (= सं. **अज्-** 'प्रेरणे') इत्यस्माद्धातोः णिचि शानचि षष्ठ्येकवचनम् । सं. **वीयमानायाः** ।

**दुइदी–** अवेस्तायां वेदे च **'दु-'** 'प्रार्थनायाम्' धातुः कल्प्यते । अस्मादेव धातोः ऋक्संहितायां **दुवस्यति** (ऋ०७.८२.५), **दुवस्य** (ऋ०१०.१४.१) इत्यादीनि रूपाणि ।

**फ़ॅरॅसोब्यो–** सं. (वै.) **पृशनेभ्यः** । अनुग्रहार्थमित्यर्थः । ऋक्संहितायामस्मिन्नर्थे **'पृशन-'** शब्दो यथा– 'ता अस्य **पृशनायुवः** सोमं श्रीणन्ति पृश्नयः' (१.८४.११) ('ताः पृश्नयः अस्य इन्द्रस्य **पृशनायुवः** अनुग्रहकामाः सोमं श्रीणन्ति)

**ॲरॅझ़्ज्योइ–** अवे. **ॲरॅश्** (= सं. **ऋजु**) + **ज्योइ** । अवेस्तायां सन्धौ 'ॲरॅश्' इत्यस्य शकारस्य झ़कारः । अवे. **'ज्योइ'** शब्दस्तु **जी-** (= सं. **जीव-**) इत्यस्माद्धातोः । चतुर्थ्येकवचनम् ।

**फ़्र्ज्याइतिश्–** अवे. **फ़्र** (= सं. **प्र**) + **ज्याइतिश्** (= सं. **ज्यातिः**); अवे. **ज्या-** (= सं. **ज्या-** 'हानौ') इत्यस्माद्धातोः ।

## ६.

**वओचत्–** अवे. **वच्** (= सं. **वच्-**) धातोः लुङि प्रथमपुरुषैकवचनम् ।

**वफ़ूश्–** सं. *वपुः । अवे. **वफ़्** 'तन्तुसन्ताने' इत्यस्माद्धातोः निष्पन्नोऽयं शब्दः 'सृष्टेः विधानम्' इत्यर्थमत्र व्यनक्ति ।

**व्यानया–** अवे. **वि-** (= सं. **वि-** उपसर्गः) + **आनया** ('आना' इत्यस्य तृतीयैकवचनम्, वै०अ० **अन्** प्राणने) अवे. **अन्** स्वाभाविकया चेतनयेत्यर्थः ।

७.

**हज़ओशो**– सं. (वै.) **सजोषः**। अवे. ज़्- सं. ज़्, ह् वा) **'सजोषस्त्वा** दिवो नरो यज्ञस्य केतुमिन्धते' (ऋ. सं. ६.२.३) इत्यत्रापि 'सजोषः' इत्यस्य 'एकचित्ततया' इत्यर्थः।

**ख़्श्वीदॅम्**– सं. **क्ष्विद्**- 'क्षरणे' (= अवे. *ख़्श्वीद्-) धातोरस्य शब्दस्य निष्पत्तिः कल्पयितुं शक्यते, यतश्च 'क्षीरम्' इत्यर्थः।

**उरुशअेइब्यो**– अवेस्तायां **ऋवर्णस्य 'उरु'**- इत्यपि विकृतिः। अतः सं. **'ऋजुभ्यः'** इति।

**दायात्**– अवे. **दा**- (=सं. **धा**- 'पोषणे) धातोः आशीर्लिङि प्रथमपुरुषैकवचनम्। सं. **धेयात्**।

**अँअँआवा**– अवे. **आवा** (= सं. **अवसा**)।

८.

**गूशता**– अवे. **गूश्**- (= सं. **घुष्**-) धातोः लङि प्रथमपुरुषैकवचनम्। अवेस्तायां **गुश्**- धातुरात्मनेपदी श्रवणार्थकश्च।

**स्पितामो**– सं. ***श्वितमः**। अवे. **स्प्** = सं. **श्व्**। '*श्वि-' इत्यस्मादेव 'श्वेत' शब्दः। **श्वेततमः** इत्यर्थः। जरठोष्ट्रस्य कोऽपि 'स्पितामो' नामकः यशस्वी पूर्वजः, यस्मात् 'स्पिताम' इति जरठोष्ट्रस्य वंशनाम।

**चरॅकॅरॅथ्रा**– सं. (वै.) **चर्कृत्या**। स्तुतिरित्यर्थे 'चर्कृतिः' इति शब्दः ऋक्संहितायां यथा- 'शमू षु वां मधूयुवास्माकमस्तु चर्कृतिः' (८.७४.९) इत्यत्र।

**द्याइ**– सं. (वै.) **दै**, यथा ऋक्संहितायां **'परादै'** (७.१९.७) इत्यस्मिन् समस्तपदे 'परादानाय' इत्यर्थे। दानाय भवतु, दीयतामित्यर्थः।

## ९.

अत्- सं. अतः ।

रओस्ता- अवे. रआद्- (=सं. रुद्-) धातोः आत्मनेपदे लुङि प्रथमपुरुषैकवचनम् । संस्कृते तु रुद्- धातुः परस्मैपदी । सं. अरोदीत् ।

ख़्शॉम्ँने- अवे. ख़्शम्- (सं. क्षम्-) धातोः शानचि चतुर्थ्येकवचनम् ।

## १०.

हुशॅइतीश्- अवे. हुशॅइतिश्- (= सं. (वै.) सुक्षिति-) प्रातिपदिकस्य द्वितीयायां बहुवचनम् । ऋक्संहितायां, यथा– 'नवा नो अग्न **आ भर** स्तोतृभ्यः **सुक्षितीरिषः**' (५.६.८) इत्यत्र 'सुक्षितीः' इत्यस्य सुनिवासाः इत्यर्थः ।

रामाँम्- अवे. रामन् (=सं. राम-) प्रातिपदिकस्य द्वितीयायां बहुवचनम् । रम्- धातोः निष्पन्नोऽयं शब्दः 'मोदः' इत्यर्थे ।

मँ्ह्‍ी- अवे. मन्- (सं. मन्-) इत्यात्मनेपदिधातोः लुङि उत्तमपुरुषैकवचनम् । सं. अमंसि ।

## ११.

मशा- अवे. मश्- (= सं *मक्ष्-) धातोः लिटि प्रथमपुरुषैकवचनम् संस्कृते *मक्ष् धातुर्नोपलभ्यते, किन्तु 'शीघ्रम्' इत्यर्थको वैदिकः 'मंक्षु' शब्दः इत्यस्माद्धातोरागत इत्यनुमातुं शक्यते ।

फ़्राख़्श्नॅने- अवे. फ़्राख़्श्नॅन्- इत्यस्य चतुर्थ्येकवचनम् । 'प्रज्ञायै' इत्यर्थः ।

# हा ३०

## १.

इशङ्तो- अवे. ईश्- (= सं. इष्- 'इच्छायाम्') धातोः शतरि द्वितीयायां बहुवचनम् ।

मज़्दाथ्रा– *'मज़्दा-दाथ्रा' इत्यत्र द्विरुक्तत्वात् एकस्य 'दा' इत्यक्षरस्य लोपे 'मज़्दाथ्रा' इति रूपम्। सं. मेधा-धाता।

स्तओता– अवे. 'स्तओत–' (= सं. (वै.) स्तुत-) इत्यस्य द्वितीयायां बहुवचनम्। 'स्तोत्र' इत्यर्थे 'स्तुत-' शब्दः।

यॆस्न्या– अवे. यस्न्य- (= सं. यज्ञ-) इत्यस्य द्वितीयायां बहुवचनम्। सं. (वै.) यज्ञा, (लौ.) यज्ञानि। यजन- सम्बद्धानि सूक्तानीत्यर्थः।

हुमाँज़्द्रा– अवे. हु- (= सं. सु-) + माँज़्द्रा (= सं. मेधिरा = मेधिराणि) शोभन-मेधा-युक्तानि।

उर्वाज़ा– अवे. उर्वाज़- 'प्रमोदे' इत्यस्माद्धातोः। सं. बृह्- 'वर्धने' धातोः 'बर्हन्-' शब्दः ऋक्संहितायामागतः। अवेस्तायां वकार-बकारयोर्व्यत्ययः।

२.

स्रओता– अवे. स्रु- (= सं. श्रु-) धातोः लोटि मध्यमपुरुष-बहुवचनम्। सं. (वै.) श्रोत ('श्रुत' इत्यपि), (लौ.) शृणुत। 'श्रोत' इति रूपम् ऋक्संहितायां- १.१२२.११; ५.८७.८; ५.८७.९;७.३९.३— एषु स्थलेषु प्रयुक्तम्।

गॅउशाइश्– अवे. 'गॅउश-' इत्यस्य तृतीयायां बहुवचनम्। 'गॅउश–' शब्दस्तु अवे. गुश् (= सं. घुष्-) इत्यस्माद्धातोः। अवेस्तायां गुश्-धातुः श्रवणे, संस्कृते तु घुष्- धातुः शब्दे।

आवअेनता– आ + अवे. वअेन्- 'प्रेक्षणे' (= सं. वेन्- 'चिन्तने') धातोः आत्मनेपदे लोटि मध्यमपुरुष-बहुवचनम्।

सूचा– सं. *शुचा। अवे. सुच्- (= सं. शुच्-) इत्यस्माद्धातोः।

आवरॅनो– आ + अवे. वरॅन-(= सं. वरण-) इत्यस्य सप्तम्यां द्विवचनम्। अत्र वरॅन -इति शब्दः 'वरणीय' इत्यर्थ। सं. आवरणीययोः।

**वीचिश्रह्या**– अवे. 'वीचिश्न'- (= सं. * **विचित**-) इत्यस्य षष्ठ्येकवचनम्। अवे. **चि**- (= सं. **चि**- 'चयने') इत्यस्माद्धातोः 'वीचिश्न-' इति 'निश्चय' इत्यर्थ।

**मज़े**– अवे. **मज़्** (= सं. **मह्**) इत्यस्य पञ्चम्येकवचनम्।

**योङ्हो**– अवे. याह् ( सं. ***यास्**) इत्यस्य पञ्चम्येकवचनम्। अवे. यह्- ( = सं. यस्- 'प्रयत्ने') इत्यस्माद्धातोः।

**सज़्द्याइ**– सं. (वै.) ***शाध्यै**। अवे. **साह्** - (= सं. शास्-) + तुमुन्नर्थको- अवे. **द्याइ** (= सं. (वै.) -ध्यै) प्रत्ययः।

३.

**ख़्वाफॅना**– अवे. **ख़्वफ़न**- (= सं. **स्वप्न**) इत्यस्य सप्तम्येकवचनम्। अतीन्द्रियध्यानावस्थायामित्यर्थः।

**अस्रवातॅम्**– अवे. **स्रव्**- (= सं. **श्रु**-) धातोः आत्मनेपदे लुङि प्रथमपुरुष-द्विवचनम्। अवेस्तायामात्मनेपदप्रयोगः बहुधा णिजन्तार्थको यथात्रापि।

४.

**जसअेतॅम्**– अवे. गम्- (= सं. गम्-) धातोः लङि प्रथमपुरुष-द्विवचनम्।

**दज़्दे**– अवे. दा- (= सं. धा-) धातोः लिटि प्रथमपुरुषद्विवचनम्।

**गअेम्**– सं. (वै.) गयम्। निघण्टौ 'गयः' इति गृहनामसु (३.४)। अवेस्तायां तु गय्- (= सं. जीव्-) इत्यस्माद्धातोः।

**अज्यातीम्**– सं. **अजातिम्**। 'गअेम्' इत्यस्य विपरीतार्थकः।

**अचिश्तो**– अवे. **अक**- (= सं. **अघ**-) **इश्तो** (= सं.- **इष्ठः**)। **अघिष्ठः** 'पापतमः' इति।

५.

ख़्रओझ़्दिश्तॅं॒ग्– अवे. ख़्रओझ़्द- (= सं. *क्रोढ-) + - इश्त- (= सं. -इष्ठ-) = सं. *क्रोडिष्ठ- । द्वितीयैकवचनम् । काठकसंहितायां 'अक्रूडयत्, क्रूड्यमान-, चक्रूडायति' इत्येतानि रूपाणि 'क्रूड्-' इति धातुं लक्षयन्ति, यतः 'क्रोडिष्ठ-' इत्यपि रूपं कल्पयितुं शक्यते ।

असॅनो– अवे. असन्- (= सं. 'अश्मन्'-) शब्दस्य द्वितीयायां बहुवचनम् । अवेस्तायां संस्कृते च असन्- (= अश्मन्) शब्दः आकाशवाची । अतश्च 'प्रकाशान्' इत्यर्थः ।

ख़्श्नओशॅन्–अवे. ख़्श्नु- (= सं. क्ष्णु) लुङि प्रथमपुरुष-बहुवचनम् । संस्कृते क्ष्णु- धातुः 'तेजने', अवेस्तायां तु ख़्श्नु- इति 'तर्पणे' ।

६.

ईश्– ई- (=सं. इदम्-) इति सर्वनाम- प्रातिपदिकस्य द्वितीयायां बहुवचनम् । अस्य प्रातिपदिकस्य 'ईम्' (द्वितीयैकवचनम्) 'ईश्' इति द्वे रूपे अवेस्तायां प्रयुक्ते लभ्यते ।

दॅबओमा– 'दॅबओमन्' प्रातिपदिकस्य प्रथमैकवचनम् । अवे. दब् (= सं. दभ्- 'दभ्मने') + अवे. मन् (= सं. मन्-) प्रत्ययः । वञ्चकः मायावी अघमन्यु ।

हॅं॒द्वारॅं॒ग्ता–अवे. हॅम् (= सं. सम्) + अवे. द्वर् (= सं. द्रु-) धातोः आत्मनेपदे लङि प्रथम-पुरुष-बहुवचनम् । सं. समद्रवन्त ।

बाँनयॅन्- अवे. बानय्- (= सं. भञ्ज्-) धातोः णिचि लङि प्रथमपुरुष-बहुवचनम् । अवे. बानय् इत्यपि अवे. बन्- इत्यस्य णिचि रूपम् ।

**मरॅतानो**– अवे. **मॅरतन्**- (= सं. (वै.) **मर्त**-, (लौ.) **मर्त्य**-) इत्यस्य षष्ठ्येकवचनम्।

७.

**कॅहरपॅम्**– सं. (वै.) **कृपम्**। शरीरम्।

**उतयूयितीश्**–**उतय्** + **ऊयितीश्**- सं. *ऊती-ऊती:। अतिशयरक्षणेन युक्तमित्यर्थ:। अतिशयद्योतनाय शब्दस्याभ्यास: यथा ऋक्संहितायां– 'समित्समित् सुमना बोध्यस्मे शुचाशुचा सुमतिं रासि वस्व:' ३/४/१ इत्यत्र **'समित्समित्'** (अत्यर्थं समिद्ध:), **शुचाशुचा** (अत्यर्थं ज्योतिषा युक्त:) इतिवत्।

**अयङ्हा आदानाइश्**– सं. **अयसा *आधानै:**। जरठोष्ट्रस्य सम्प्रदायानुसारेण मरणानन्तरं जीव: असुरमेधा द्वारा(परमेश्वरेण) परीक्ष्यते, सा च परीक्षा अग्नितप्तेन द्रवीभूतेन लौहेन विधीयते, पुण्यात्मा जीव: अस्यां परीक्षायां अक्षत: तिष्ठति परमेश्वरस्य च पुरस्कारं लभते। पापात्मा तु तत्र नश्यति। अयमेव अयसा आधानमिति। तुलनीया सीताया अग्निपरीक्षा।

८.

**कऐना**– अवे. **चि**- (= सं. **चि**-) धातो: निष्पन्नोऽयं शब्द: 'प्रतिफलं, दण्डं वा' इत्यर्थे।

**वोँइवीदाइते**–अवे. **विद्**- (= सं. **विद्**- 'लाभे') धातो: आत्मनेपदे यङि णिचि लटि प्रथमपुरुषैकवचनम्।

**ददॅन्**– अवे. **दा**- (= सं. **दा**-) धातो: लटि प्रथमपुरुषबहुवचनम्। सं. (वै.) **ददन्**, (लौ.) **ददति**।

## ९.

**ख़्यामा–** अवे. **अह्-** (= सं. **अस्-**) धातोः विधिलिङि उत्तमपुरुष-बहुवचनम्। अवे. **ख़्य्** = सं. **स्य्-**।

**फ़्रशॅम्–** अवे. फ़्राॅङ्क् (= सं. प्राङ्) इत्यस्य द्वितीयैकवचनम्। सामर्थ्य-युक्तमित्यर्थः।

**बरन्त–** अवे. **बर्-** (= सं. **भृ-**) धातोः शानचि प्रथमायां बहुवचनम्।

**हथ्रा-मनो–** सं. **सत्रा-मनाः**। ऋक्संहितायामपि **'सत्रा-करः'** (१.१७८.४), **'सत्रा-दावन्'** (१.७.६), **'सत्रा-सहः'** (२.२१.३) इत्यनेकेषु समस्त-पदेषु **'सत्रा'** इति 'सह' इत्यर्थे।

**मअेथ्रा–** अवे. **मअेथ्-** (= सं. **मिथ्-**) धातोः। सं. *मिथा। संदिह्यमाना इत्यर्थः।

## १०.

**स्पयथ्रह्या–** अवे. **स्पयथ्र-** (= सं. (वै.) **श्वात्र-**) प्रातिपादिकस्य षष्ठ्येकवचनम्।

**असिश्ता–** अवे. **आसह्** (= सं. (वै.) **आशस्-**) + **इश्त** (= सं. **इष्ठन्**) प्रत्ययः। तृतीयैकवचनम्।

**ज़ज॑ङ्ते–** अवे. **हज़्-** (= सं. **सह्-**) धातोरात्मनेपदे लटि प्रथमपुरुष-बहुवचनम्।

## ११.

**ख़्वीती–** सं. **स्वस्तिः**। अवे. **ख़्व्** = सं. **स्व-**।

**ॲनइती–** अवे. **अअेनह्-** (= सं. **एनस्-**) इत्यस्माद् भावे प्रत्ययः। **'ख़्वीती'** इत्यस्य विपरीतार्थकः। अतः **'क्षतिः'** इत्यर्थः।

रशो– संस्कृते 'रक्षस्' शब्दः अवेस्तायाः 'रशो' इत्यनेन सम्बद्धोऽनुमीयते यतः 'रशो' इत्यस्य 'पीडनमित्यर्थः'।

## हा ३२

### १.

अख़्या– सं. **अस्य**। अवे. **ख़्य** = सं. स्य। पदान्त-स्वरो द्राघितः।

ख़्वअेतुश्– अवे. ***ख़्वअेतव-** (= सं. (वै.) **स्वतव-**) इत्यस्य प्रथमैकवचनम्। ऋक्संहितायां 'अया ह त्यं मायया वावृधानं मनोजुवा स्वतवः पर्वतेन'(ऋ० ६.२२.६) इत्यत्र '**स्वतवः**' इन्द्रस्य सम्बोधने 'स्वाधीनशक्ति'- रित्यर्थे।

वॅरॅज़नॅम्– सं. **वृजनम्**। ऋक्संहितायां- 'आ घा योषवे सूनर्युषा याति प्रभुञ्जती। जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः' (१४८.५) इत्यत्र अन्येषु च स्थलेषु 'समूह' वाची 'वृजन-' शब्दोऽत्र 'जन-साधारण' वाची, क्लीबे च।

यासत्– अवे. **यास्-** (= सं. **याच्-**) धातोः लङि प्रथमपुरुषैकवचनम्।

मत्– सं. (वै.) **स्मत्**। 'सह' इत्यर्थे।

अइर्यम्ना– अवे. **अइर्यमन्** (= सं. **अर्यमन्-**) इत्यस्य तृतीयैकवचनम्। अत्र 'अइर्यमन्' शब्दः न देवतावाचकः, अपितु 'आर्यजनः, श्रेष्ठजनः अभिजातः' इत्यर्थे।

उर्वाज़्मा– अवे. **उर्वाज़्-** (= सं. **बृह्-**) + -म प्रत्यये द्वितीयायां बहुवचनम्।

दारयो– अवे. **दारय्-** (= सं. **धारय्-**) इत्यस्य तुमुन्नर्थकं रूपम्। सं. (वै.) ***धारये**।

२.

सारॅम्नो– अवे. स्रर्- (= सं. श्रि-) धातोरात्मनेपदे शानचि प्रथमैकवचनम्।

ख़्शथ्रात्– सं. क्षत्रात्। तृतीयार्थे पञ्चमी। क्षत्रेण इत्यर्थः। शासन-शक्तेरधिदेवता 'क्षत्रः'।

ख़्वॅन्वाता– सं. *स्वनवता। अवे. ख़्वॅन- शब्दः संस्कृतस्य 'स्वर्'- शब्दस्य समानार्थकः प्रकाशवाची।

वरॅमइदी– अवे. वर्- (= सं. वृ- 'वरणे') धातोः विधिलिङि उत्तमपुरुष-बहुवचनम्।

३.

चिथ्रॅम्– *सं. *चित्रम्। अवेस्तायां नपुंसकलिङ्गी 'चिथ्रम्' शब्दः अपत्य-वाचकः। समुदायार्थे एकवचनम्।

मश्– सं. (वै.) महः। अत्यधिकमित्यर्थः। ऋक्संहितायां 'यजामहे वां महः सजोषा' (१.१५३.१) इत्यत्र।

श्यओमाँ म्–अवे. 'श्यओमन्' इत्यस्य प्रथमायां बहुवचनम्। अवे. 'श्यओथ्न'- (= सं. (वै.) च्यौत्न) शब्दस्यैव रूपान्तरमयं शब्दः।

अस्रूदूम्– आ (उपसर्गः) + अवे. स्रव् (= सं. श्रु-) धातोः आत्मनेपदे लुङि मध्यमपुरुषबहुवचनम्।

हप्तइथे– सं. (वै.) सप्तथे। ऋक्संहितायां– 'साकंजानां सप्तथमाहुरेकजं–' (१.१६४.१५) इत्यत्र 'सप्तथम्' इत्यस्य सप्तममित्यर्थः।

४.

याअत्– 'यद्' इत्यस्य पञ्चम्येकवचनम्। सं. यस्मात्।

फ़्मीमथ़्रा– अवे. फ़्र (= सं. प्र-) + मा- (= सं. मा-) धातोः लिटि मध्यमपुरुषबहुवचनम्। सं. प्रमम।

दॅ्तो– अवे. दा- (= सं. धा-) धातोः शतरि प्रथमायां बहुवचनम्। सं. दधन्तः।

सीझ़्द्यम्ना– अवे. सिश्- (= सं. शिष्-) + दा- (= सं. धा-) इति धातुद्वययोगात् अवे. सीझ़्दा- इति धातुः, अस्माच्च धातोः शानचि प्रथमायां बहुवचने 'सीझ़्द्यम्ना' इति रूपम्।

५.

दॅबॅनओता– अवे. दब्- (= सं. दभ्-) धातोः लङि मध्यमपुरुष- बहुवचनम्।

मशीम्– अवे. 'मश्य-' (= सं. मर्त्य-) प्रातिपादिकस्य द्वितीयैकवचनम्।

यॅंग्– 'यद्-' इत्यस्य द्वितीयायां बहुवचनम्।

दअेवे्ग्– अवे. 'दअेव-' (= सं. देव-) इत्यस्य द्वितीयायां बहुवचनम्।

फ़्चिनस्– अवे. फ़्र- (= सं. प्र-) + अवे. चि- (= सं. चि-) धातोः लङि प्रथमपुरुषैकवचनम्।

ख़्शयो– अवे. ख्शि- (= सं. क्षि-) 'शासने' इत्यस्माद्धातोः अवे. 'ख्शयह्-' (= सं. क्षयस्-) इति नपुंसकलिङ्गि प्रातिपादिकं, तस्य चेदं द्वितीयैकवचनम्।

६.

ॲनाख़्श्ता– आ- + अवे. नख्श- (= सं. (वै.) नक्ष-) आत्मनेपदे लङि प्रथमपुरुषैकवचनम्।

वोइस्ता– अवे. विद्- (= सं. विद्-) धातोः लिटि मध्यमपुरुषैकवचनम्।

सँङ्हो– अवे. साह् (= सं. शास्-) इत्यस्माद्धातोः।

वीदाँम्– अवे. विद्- (= सं. विद्-) धातोः लेटि प्रथमपुरुषैकवचनम्।

७.

वीद्वो– अवे. विद्- (= सं. विद्-) + वस् (= सं.- क्वसु-) = अवे. वीद्वह्- (= सं. विद्वस्-), इत्यस्य प्रथमैकवचनम्।

अओजोइ– अवे. अओज़्- (= सं. ऊह-) धातोः तुमुन्नर्थकं रूपम्। सं. (वै.) ऊहये।

हाद्रोया– अवे. हाद्रा- (= सं. (वै.) सिध्रा-) इत्यस्य तृतीयैकवचनम्। ऋक्संहितायां 'संछायया दधिरे सिध्रयाप्स्वा' (५.४४.६) इत्यत्र 'सिध्रया' इति 'सत्यया' इत्यर्थे।

जोया– अवे. 'ज्वय-' इत्यस्य तृतीयैकवचनम्। 'जीवन-प्रणाल्या' इत्यर्थः।

सँङ्हइते– अवे. सह् (= सं. शास्) धातोः कर्मवाच्ये लटि प्रथमपुरुषैकवचनम्।

स्रावी– सं. (वै.) श्रावि, यथा ऋक्संहितायां– 'ये युक्त्वाय पञ्च शतास्मयु पथा विश्राव्येषाम्' (१०.९३.१४) इत्यत्र 'विश्रावि' इति।

८.

चिख़्श्नुशो– अवे. ख़्श्नु- (= सं. क्ष्णु-) धातोः सन्नन्तं रूपम्।

ख़्वारॅम्नो– अवे. ख़्वर्- 'भक्षणे' (= सं. * स्वर्-) धातोः णिचि शानचि प्रथमैकवचनम्।

९.

दुश्-सस्तिश्– अवे. दुश्- (= सं. दुस्-) + अवे. सह्- (= सं. शास्-) धातोः। सं. दुःशास्ता।

स्रवो- अवे. 'स्रवह्-' (=सं. श्रवस्-) इति नपुंसक- लिङ्गि- प्रातिपदिकस्य द्वितीयायां बहुवचनम्। संस्कृते 'श्रवस्' शब्दः ख्यातिरित्यर्थे, अत्र तु श्रुतेः समानार्थकः।

मोरॅॅ्ंदत्- अवे. मरॅद् (= सं. मृद्-) धातोः लटि प्रथमपुरुषैकवचनम्।

ज्यातॅ उश्- अवे. ज्यातु- (= सं. (वै.) जीवातु-) इत्यस्य षष्ठ्येकवचनम्। ऋक्संहितायां–'एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये' (१०.६०.८) इत्यत्र 'जीवातवे' इति 'जीवनाय' इत्यर्थे।

ईश्तीम्- अवे. ईस्- (= सं. ईश्-) इत्यस्माद्धातोः।

बॅरॅख़्ध्राँम्- अवे. बरॅग्- (= सं. बृह-) इत्यस्माद्धातोः क्त- प्रत्यये स्त्रीलिङ्गे द्वितीयैकवचनम्।

## १०.

ह्वरॅ- सं. स्वर् (अव्यय), अवेस्तायां 'ह्वर्' शब्दः सूर्यवाची।

वोइझ्दत्- अवे. वएग् (= सं. विज्-) + दा- (= सं. धा-) इति धातुद्वय- संयोगात् अवेस्तायां वोइझ्दा- इति धातोः लुङि प्रथमपुरुषैकवचनम्।

## ११.

चिकोइतॅरॅश्-अवे. चित्- (= सं. चित्-) धातोः लिटि प्रथमपुरुष- बहुवचनम्।

अङ्हीश्- सं. *अस्वीः 'प्रभुः' इत्यर्थे अवे. अङ्हु- (= 'असु') शब्दस्य स्त्रीलिङ्गे प्रथमायां बहुवचनम्।

**रअेख़्नॅनङ्ह्हो**–सं. (वै.) रेक्णसः। पञ्चम्येकवचनम्। निघण्टौ '**रेक्णः**' 'रिक्थम्' इत्यस्य समानार्थकः (२.१०)।

**रारॅश्याँन्**– अवे. रश्- (= सं. * रक्ष् 'हानौ') धातोः यङि लटि प्रथमपुरुष-बहुवचनम्।

## १२.

**रोङ्ह्यॅन्**– अवे. राह्- (= सं. रास्-) धातोः लुङि प्रथमपुरुष- बहुवचनम्।

**ग्रॅह्मा**– अवे. ग्रह् (= सं. ग्रस्-) धातोः 'म' प्रत्यये अवे. ग्रॅह्म- (= सं. *ग्रस्म-) इत्यस्य प्रथमायां बहुवचनम्।

**करपा**– अवे. 'करप'- इत्यस्य प्रथमायां बहुवचनम्। अवे. करप्- (= सं. कल्प्-) धातोरस्य शब्दस्य निष्पत्तिः, अतश्च संस्कृते कर्मकाण्डविधिवाची 'कल्प-' शब्दः अनेन सम्बद्धः प्रतीयते।अत्र अवेस्तायाः गाथासु तु जरथुश्त्र-विरोधिनां पुरोहितानामभिधानम् 'करप'- इति।

**ईशनाँम्**– अवे. इश्- (= सं. इष्- 'इच्छायाम्' धातोः 'ईश-' इत्यस्य षष्ठ्यां बहुवचनम्। 'इच्छतामित्यर्थः'।

## १३.

**हीशसत्**– अवे. हन्- (= सं. सन्- 'सेवायाम्') धातोः सनि प्रथमपुरुषैकवचनम्।

**मरॅख़्तारो**– अवे. मरॅक्- (= सं. मृच्-) धातोः तृ-प्रत्यये प्रथमायां बहुवचनम्।

**जीगॅरॅज़त्**– अवे. गॅरॅज़्- (सं. गर्ह्-) धातोः यङि लुङि प्रथमपुरुषैकवचनम्।

मॉथ्रानो– अवे. मॉथ्रन् (= सं. मन्त्रिन्) इत्यस्य षष्ठ्येकवचनम्। अवेस्तायां 'मॉथ्रन्' इति 'मन्त्राणां स्तोता' इत्यर्थे।

## १४.

होइथ्रोइ– अवे. हाय्- (= सं. सि- 'बन्धने' धातोः तुमुन्नर्थको -थ्रोइ (= सं. (वै.) -तवे) प्रत्ययः। वेदे 'गन्तवे' इतिवत्।

वीसॅन्ता– अवे. विस्- (= सं. विश्-) धातोः आत्मनेपदे लङि प्रथमपुरुष-बहुवचनम्। संस्कृते तु 'विश्' धातुः परस्मैपदी।

जइद्याइ– अवे. जन्- (= सं. हन्-) धातोः तुमुन्नर्थको -द्याइ (= सं. (वै.) - ध्यै) प्रत्यय; यथा वेदे 'गमध्यै' इत्यत्र।

म्रओइ– अवे. म्रू- (= सं. ब्रू-) धातोः कर्मणि लुङि प्रथमपुरुषैकवचनम्।

सओचयत्– अवे. सुच् (= सं. शुच्-) धातोः णिचि लुङि प्रथमपुरुषैकवचनम्।

## १५.

अनाइश्– अवे. अन- (= सं. इदम्) प्रातिपदिकस्य तृतीयायां बहुवचनम्। अवे. आइश् = सं. -ऐः। सं. *अनैः = *एनैः एभिः।

नॅनासा– अवे. नस्- (= सं. नश्-) धातोः लिटि प्रथम-पुरुषैकवचनम्। बहुवचनस्य स्थानेऽत्र एकवचनम्।

करपोतोस्– अवे. करप- शब्दात् समूहवाची -ता प्रत्यये प्रथमायां बहुवचनम्। संस्कृते 'जनता' इत्यत्र समूहे -ता प्रत्ययः।

अवाइश्– अवे. अव- (= सं. इदम्) प्रातिपदिकस्य तृतीयायां बहुवचनम्। सं. *एभिः।

## १६.

**उशुरुये–** अवे. ***सुरुये** (= सं. **श्रवे**) इत्यस्मिन्नादौ उकारागमे, उकारसान्निध्यात् च सकारस्य शकारे 'उशुरुये' इति। तुमुन्नर्थे चतुर्थी।

**स्यस्–** सं. (वै.) शिस्, यथा 'प्रशिस्' इत्यस्मिन् शब्दे।

**ख़्शयाँस्–** अवे. **ख़्श-** (= सं. **क्षि-** शासने) धातोः शतरि प्रथमैकवचनम्।

**अँअेआनू–** अवे. **आनू** (= सं. **अनु-**) इत्यस्य छन्दोऽनुरोधात् अँअे- इति योगेन विस्तारः।

## हओमे यश्त = सोम *यष्टः

**यश्त–** अवे. **यज़-** (= सं. **यज्-**) + -त। सं. ***यष्ट-**। अवेस्तायां 'यश्त-' प्रकरणे पूज्यानां यज्ञार्हाणां सोम-सूर्य-चन्द्रादीनां स्तुतयः तेषामुदात्तचरितानाञ्च वर्णनानि संकलितानि सन्ति।

## १.

**रतुम्–** सं. **ऋतुम्**। 'ऋतप्रवर्तको धर्मोपदेष्टा' इत्यर्थेऽपि 'रतु-' शब्दः। अत्र तु कालवाची। ज़रथुश्त्र-मतावलम्बिषु अहोरात्रं पञ्चसु भागेषु विभक्तं, तद्यथा- (१) मध्यरात्रेः यावत् उषाकालं **'उशहिन'** इति, (२) उषाकालात् मध्याह्नपर्यन्तं **'हावनी'** इति, (३) मध्याह्नात् निवादनवेलापर्यन्तं **'रपिथ्वन-'** इति, (४) ततः सूर्यास्तं यावत् **'उज़येइरिन'** इति, (५) ततश्च आमध्यरात्रि **'अइविस्रूथ्रेम'** इति।

**पइरि-** यओझदथॅ- तॅम्– अवे. **पइरि-** (= सं. **परि**) + **यओझ्** (= सं. **योस्**) + **दथॅ- तॅम्** (= सं. **दधन्तम्**)।

अस्त्वतो– सं० अस्थवतः (< अस्थिवतः) = शरीरिणाः। अवे. अस्त्, अस्ति, अस्तो = सं. अस्थि अस्त्वान् = शरीरधारी।

## २.

सओश्यन्तो–अवे. शु- 'पूजायाम्' इत्यस्माद्धातोः। सं. *शोष्यन्तः। ये पुण्यात्मानः भूतकाले, भविष्यति वा धर्म-संस्थापनाय आगताः आगमिष्यन्ति वा तेषां अवेस्तायां 'सओश्यन्त' इत्यभिधानम्।

## ३.

अरॅनावि– अर्- 'दाने' धातोः कर्मणि लुङि प्रथमपुरुषैकवचनम्।

चित्– सं. चित् 'किम्' इत्यस्य सर्वनामप्रातिपदिकस्य तालव्यीकृतं रूपान्तरमिदम्। किमित्यर्थः।

आयप्तॅम्– 'आ + आप्- + -त' इत्यस्य द्वितीयैकवचनम्।

## ४.

ख़्शएतो– अवे. ख़्शि- (= सं. क्षि- 'शासने') धातोः शतरि प्रथमैकवचनम्।

ह्वॉङ्व्हो– अवे. हु- (= सं. सु-) + वॉङ्व्ह- इत्यस्य प्रथमैकवचनम्। अवे. वाँङ्व्ह इति वन् (= सं. वन्-) धातोः यस्मात् ऋक्संहितायां (३.३०.१८) 'वन्ता' इति समानार्थकः।

ख़्वरॅनङ्हस्तॅमो– अवे. ख़्वरॅनङ्ह्वन्त् (= सं. (वै.) स्वर्णवत्) + तम (= सं. तमप्-) प्रत्ययः। ऋक्संहितायां 'सोमानं स्वरणं कृणुहि ब्रह्मणस्पते (१.१८.१) इत्यत्र 'स्वरणं' इति 'दीप्तम्'-इत्यर्थे।

पसु-वीर– सं. (वै.) पशु-वीरा (= लौ. पशु-वीरौ)। द्वन्द्व-समासः।

आप-उर्वइरे–द्वन्द्व-समासः।

**अजयम्नॅम्**– अवे. ज्या- (= सं. ज्या- 'हानौ') धातोः शानचि नञ्पूर्वकस्य प्रातिपदिकस्य द्वितीयैकवचनम् ।

## ६.

**अउर्वहे**– सं. **और्वस्य**। संस्कृते वडवाग्नि-पर्यायः 'और्व-' शब्दोऽत्र 'तेजस्वीत्यर्थे' ।

## ७.

**आथ़्व्यो**– ऋक्संहितायाम् 'आप्त्यः' इति 'त्रितः' इत्यस्य विशेषणम् । अवेस्तायां तु 'थ्रितो' इति सामवंशीयः कश्चिदन्यः आप्त्यात् । अवेस्तायां पुनः 'आथ़्व्य' इत्यस्य पुत्रः 'थ्रअेतओनो' (= सं. **त्रैतानः**) त्रिशिरस्कमहिं जघान इति वर्णितम्, ऋक्संहितायां तु 'त्रित आप्त्यः' एव त्रिशिरस्कस्य त्वाष्ट्रस्य हन्ता इति विसंवादः ।

**वीसो**– अवे. **वीस्-** (= सं. **विश्-**) इत्यस्य षष्ठ्येकवचनम् । कुलस्येत्यर्थः ।

## ८.

**दहाकॅम्**– अवे. **दह्-** (= सं. दश्-, दंश्-) धातोः -**क** प्रत्ययः । सं. **दंशकम्** ।

**थ्रि-ज़फ़नॅम्**–अवे. **थ्रि-** (= सं. त्रि-) + **ज़फ़न-** (= सं. **जम्भ-** इत्यस्य द्वितीयैकवचनम् ।

**गअेथ़ाब्यो**– अवे. **गअेथ़ा-** (= सं. ***गयता**) इत्यस्य चतुर्थ्येकवचनम् । अवे. -**थ़ा** (= सं. **-ता**) प्रत्ययः समूहवाची, यथा- 'जनता' इत्यत्र ।

**मह्र्काइ**– अवे. **मरॅच्-** 'विनाशे' इत्यस्माद्धातोः '**मह्र्क्-**' इति प्रातिपदिकस्य चतुर्थ्येकवचनम् । ऋक्संहितायाम्– 'मा नो मृचा रिपूणां वृजिनानामविष्यवः' (८.६७.९) इत्यत्र 'मृच्'-इति समानार्थकः ।

## १०.

दातो-राज़ो– अवे. 'दातो' इति दा- (= सं. धा-) इत्यस्माद्धातोः 'धर्म' इत्यर्थे। अतश्च संस्कृते 'धर्मराजः' इति समानार्थकः।

## ११.

आर्श्त्यो- बरॅज़– अवे. आर्श्त्य- = सं. ऋष्टिः। अवे. वरॅज़ इति अवे. वरॅज़ (= सं. बर्ह्, बृह-) इत्यस्माद्धातोः 'परिमितम्' इत्यर्थे।

पितूम्– सं. पितुम्। भोजनवाची 'पितु' शब्दः ऋक्संहितायां बहुधा प्रयुक्तः, यथा- 'अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना' (१.६१.७) इत्यत्र।

ज़्वानॅम्– अवे. ज़्र- (= सं. जृ- 'वयोहानौ') इत्यस्माद्धातोः, कालः इत्यर्थः। अस्मादेव शब्दात् पारसीकभाषायां 'ज़माना' इति शब्दः।

ख़्वीसत्– अवे. ख़्विस् (= सं. स्विद्) धातोः लङि प्रथमपुरुषैकवचनम्।

परोङ्ह्त्– अवे. परा- (= सं. परा-) + अह्- (= सं. अस्- 'क्षेपणे') धातोः लङि प्रथमपुरुषैकवचनम्।

## १३.

पौउरुशस्पो- सं. परुषाश्वः। जरठोष्ट्रस्य पितुः नाम। जरठोष्ट्रस्य वंशानुक्रमस्तु– 'ज़रथुश्त्र- पाउरुशस्प-पएतिरस्प-अउर्वत्-अस्प-हएचत्-अस्प-चख़्श्नुश्-पएतिरस्प-हर्दर्श्न-हरिदर्-स्पितम' इति 'बून्दहिश्न' इत्यादिषु ग्रन्थेषु वर्णितः।

## १४.

अइर्यॅने वएजहे– सं. आर्ये बीजे। आर्याणां मूल-स्थाने इत्यर्थः। इत्यस्मादेव पह्लवी-भाषायां 'ईरान वेज़' इति यस्माच्च पारसीकभाषायां 'ईरान' इति देशाभिधानम्।

**ख़ओझ्द्ग्हेह्य**–अवे. ख़ओझ्द्य- इत्यस्य तृतीयैकवचनम्। अवे.'ख़ओझ्द्य' शब्दस्तु अवे. ख़ुत्- (= सं. क्रुध्-) + दा- (= सं. धा-) इति धातु-द्वय- संयोगात् निष्पद्यते।

## १५.

**ज़ॅमर्-गूज़ो**– अवे. ज़ॅम- (= सं. (वै.) ज्मा निघण्टौ (१.१) पृथिवीपर्यायः)। अवे. गुज़् (= सं. गुह्-) इत्यस्माद्धातोः ज़ॅम- इत्यनेन समासे ज़ॅमर्गूज़्- (= सं. ज्मागुह्) इत्यस्य प्रथमायां बहुवचनम्।

**वीस्पे दअेव**–सं. विश्वे देवाः। द्वितीयास्थाने प्रथमा। विश्वान् देवान् इत्यर्थः।

**आय**– सं. (वै.) अया, (लौ.) अनया। 'अया विधेम नवया महा गिरा' ऋ. सं. २.२४.१।

**वॅरॅथ्रजाॅस्तॅमो**– अवेस्तायां वॅरॅथ्रजन् (= सं. वृत्रहन्-) शब्दः 'विजयी' इत्यर्थे। अस्य- तमप् प्रत्यये 'वॅरॅथ्रजाँस्तॅमो' (= सं. वृत्रहन्तमः) इति।

## १६.

**वङ्हुश्**– सं. वसुः। 'वयं ते अस्य वृत्रहन् वसो वस्वः पुरुस्पृहः' ऋ.सं. ९.९८.५. इत्यत्र सोम- सम्बोधने 'वसो' इति।

**हुद्रातो**– अवे. हु- (= सं. सु-) + दा- (= सं. धा-) + -त प्रत्ययः। सं. सुधितः। ऋक्संहितायां– 'निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता' ३.२३.१ इत्यत्र 'सुधितः' इति अग्नेः विशेषणम्।

**अर्श्द्रातो**– सं. ऋत-धितः। ऋक्संहितायां सोमः 'ऋतजातः' इति वर्णितः, यथा 'ऋतेन य ऋतजातो विवावृधे' (९.१०८.८) इत्यत्र।

**उरुनअे**– सं. *उर्वणे। अवे. उर्वान्- इत्यस्य चतुर्थ्येकवचनम्।

## १७.

त्बअेशो- तउवाेर्‍ा– अवे. **त्बअेशो**- सं. **द्वेषस्**। अवे. '**तउवाेर्‍ा**' इति अवे. **तउर्व**- (= सं. (वै.) **तुर्व**- धर्षणे) इत्यस्माद्धातोः शतरि अवे. **तउर्वन्** = सं. **तुर्वन्**- इत्यस्य प्रथमैकवचनम्। '**तुर्वन्**' शब्दः ऋक्संहितायां यथा "यत्पृत्सु **तुर्वणे** सहस्तच्छ्रेष्ठमश्विनो रवः" (८.९.१३) इत्यत्र।

## १८.

साँथ्राम्– अवे. '**सातर्**' (= सं. **शास्तृ**) इत्यस्य षष्ठ्यां बहुवचनम्। प्रजापीडकानां शासकानामित्यर्थः।

कओयाँम्– अवे. 'कवि-' (= सं. **कवि**-) इत्यस्य षष्ठ्यां बहुवचनम्। पारसदेशे प्राचीनकाले शासकानां '**कविः**' इत्युपाधिरासीत् यथा **कव हुस्रव**' = सं. **कविः सुश्रवाः** इति। अत्र तु ते 'कविः' इत्युपाधिधारिणः शासकाः अभिमताः ये जरठोष्ट्र-मत-विरोधिनः। अतः 'पश्यन्तोऽपि अपश्यताम्' इति विशेषार्थः।

करफ़्नॉम्– अवे. **करफ़न्** (= सं. कृपण-) इत्यस्य षष्ठ्यां बहुवचनम्। अवेस्तायां तु शृण्वन्नपि अशृण्वतोऽर्थे 'करफ़न्' शब्दः।

अशॅमओग़नाँम्– अवे. **अश**- (= सं. **ऋत**) + **मओग़**- (= सं. मोघ-) इत्यस्य षष्ठी-बहुवचनम्। '**मओग़**' शब्दस्तु अवे. **मुग़्**- (= सं. **मुह**-) धातोः।

## १९.

यानॅम्– अवे. **यम्**- (= सं. **यच्छ्**-) इत्यस्माद्धातोः 'दानमित्यर्थः।

जइद्र्येमि– अवे. **जद्**- (= सं. **गद्**-) धातोः लटि उत्तमपुरुषैकवचनम्।

उश्तानहे– सं. **उत्तानस्य**। प्राणस्येत्यर्थः।

## २०.

**अओेशो**– सं. एषः अवे. इश्- (= सं. इष्-) धातोः। स्वेच्छानुकूलवर्तने समर्थ इत्यर्थः।

## २१.

**गद्रॅम्**– सं. *गधम्। घातकमित्यर्थः।

## २२.

**अउर्वन्तो**– सं. अर्वन्तः। अवे. अर् (= सं. ऋ-) इत्यस्माद्धातोः शतरि द्वितीयायां बहुवचनम्। ऋक्संहितायाम् 'प्र स्वानासो रथा इ-वार्वन्तो न श्रवस्यवः। सोमासो राये अक्रमुः॥' (९.१०.१) इत्यत्र 'अर्वन्तो न' इति 'अश्वाः इव' इत्यर्थे।

**सिता**– सं. (वै.) सिता 'ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपन्ति **विषितासो अश्वाः**' ऋ सं. ६.६.४ 'विषितासः सुशिक्षिताः इति।

## २३.

**अग्रग्रवो**– अवे. अ- (= सं. अ) + अवे. ग्रु- (= सं. गुरु- 'पतिः इत्यर्थे) इत्यस्य प्रथमायां बहुवचनम्।

**रॉद्रम**– सं. राधम्। अवे. राद्- (= सं. राध-) इत्यस्माद्धातोः।

**मोशु**– सं. (वै.) मक्षु। 'वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम्। **माक्षिवत्था** धिया नरा। ऋ सं. १.२.६। मक्षु शीघ्रम्।

## २४.

**रऔस्त**– अवे. रओद्- (= सं. रुह-) धातोः लङि प्रथमपुरुषैकवचनम्। सं. अरुद्ध।

**अपिवतह**– अवे. अइपि (= सं. अपि-) + वअेत्- (= सं. विद्) धातोः आत्मनेपदे लटि मध्यमपुरुषैकवचनम्। संस्कृते तु ज्ञानार्थकविद्-धातुः परस्मैपदी। सं. अपिवेत्सि।

## २८.

**अइव्यांघ्हॅम्–** अवे. **अइवि-** (= सं. **अभि-**) + **अह्-** (= सं. **अस्** 'क्षेपणे') धातोः। सं. अभ्यसनीम् यज्ञोपवीत्वत् *अभियासनी अपि उपनयनकालात् मरणपर्यन्तं धार्यते जरठोष्ट्रमतानुयायिभिः। तेषु वयसः सप्तमवर्षात् आपञ्च दशवर्षं यस्मिन् कस्मिन्नपि वर्षे उपनयन-संस्कारः विधीयते। अभियासनी तु मेखलावत् कटिप्रदेशे धार्यते। साम्प्रतम् *अभियासनी 'कुस्ति' इति संज्ञा।

**स्तहर्-पअेसङ्हॅम्–** सं. **स्तृ-पेशसाम्**। नक्षत्र-पर्यायः 'स्तृ-' शब्दः ऋक्संहितायां प्रयुक्तः, यथा- 'अरुषस्य दुहितरा विरूपे **स्तृभिरन्या** पिपिशे सूरो अन्या' (६.४९.३) इत्यत्र।

**बर्श्नुश्–** अवे. **बरॅज़्-** (= सं. **वृंध्-**) इत्यस्माद्धातोः। द्वितीया-बहुवचनम्। सं. *बर्ध्नुः।

**दअेनॉम्–** सं. (वै.) **धेनाम्**। 'वायो तव पपृञ्चती **धेना** जिगाति दाशुषे। उरूची सोमपीतये॥ ऋ.सं. १.२.३॥ अत्र 'धेना' इति 'दानस्य प्रवाहः' इत्यर्थे। अवेस्तायां तु 'दअेना' इति धर्म- पर्यायः। अस्मादेव पारसीकभाषायां 'दीन्' शब्दः।

## २९.

**फ़्रतुयो–** अवे. **फ़्र-** (= सं. **प्र-**) + **तु-** धातोः विधिलिङ् मध्यमपुरुषैकवचनम्।

**अअेनङ्हइति–** सं. **एनस्यति**। अवे. **अअेनह्** (= सं. **एनस्-**) इत्यस्मात् नामधातोः लॅाट प्रथमपुरुषैकवचनम्।

## ३१.

**नाशॅम्नाइ–** अवे. **नश्-** (= सं. **नश्-**) धातोः शानचि चतुर्थ्येकवचनम्। सं. *नश्मने।

**वद्रॅ–** सं. (वै.) वधर्। वज्र-पर्यायः। ऋक्संहितायां यथा– 'तमव रुद्रा अशसो हन्तना वधः' २.३४.९ इत्यत्र।

**जहिकयाइ–** अवेस्तायां 'जहिका' शब्दः 'दुराचारिणी' इत्यर्थे। अस्य संस्कृते 'हस्रिका' इत्यनेन वर्ण-संवादः। तुलनीयः ऋक्संहितायां 'हस्रा' इति उषसः उपमान-रूपेण प्रयुक्तः, यथा–'उषा हस्रेव नि रिणीते अप्सः' इत्यत्र 'हस्रा इव' इत्यस्य 'सुन्दरी स्त्रीः इव' इत्यर्थः।

## मॅहॅर् यश्त् = सं. मित्र-इष्टः

### १.

**वीउरु-गओयओइतीम्–** सं. उरु-गव्यूतिम्। ऋक्संहितायां– 'परा मे यन्ति धीतयो गावो न गव्यूतीरनु। इच्छन्तीरुरुचक्षसम्' (ऋ. १.२५.१६) इत्यत्र 'गव्यूति-' शब्दः 'गोचारणभूमिः' इत्यर्थे।

**वहम्यत–** अवे. वन्– (= सं. (वै.) वन्- 'स्तुतौ') धातोः 'वह्म' (=सं. (वै.) वस्म-) इति शब्दः, अस्मात् य- प्रत्यये 'वहम्य' इति 'स्तुत्यः' इत्यर्थे। ऋक्संहितायां 'वस्मन्' शब्दः 'प्र यद् वयो न पप्तन् वस्मनस्परि श्रवस्यवो हृषीवन्तो वनर्षदः', (ऋ. २.३१.१) इत्यत्र मरुतां विशेषणम्।

### २.

**मॅरॅ्चइति–** सं. मर्चयति। 'यो नो अग्ने अररिवाँ अघायुररातीवा मर्चयति द्वयेन। मन्त्रो गुरुः पुनरस्तु सो अस्मा अनु मृक्षीष्ट तन्वं दुरुक्तैः॥ ऋ. सं. १.१४७.४॥ इति तुलनीयः।

**कयद्रनाँम्–** अवेस्तायां 'कयद्र' इति 'पाप्मा' इत्यर्थे।

३.

**फ़्रवशयो–** जरठोष्ट्र- मते लौकिकानामलौकिकानाञ्च प्राणिनां पञ्चोपादानानि कल्पितानि तानि चोपादानानि 'अहु (सं. असु-), दअेन (सं. धेना 'धर्मबुद्धिः'), बआद्गह् (सं. बोधः), उर्वान् (सं. आत्मा), फ्रवशि च' इति। एषु पञ्चोपादानेषु 'फ्रवशि' इत्युपादानं शाश्वतिकं मरणानन्तरमपि तिष्ठति। 'फ्रवशि' इति कल्पना तु जरठोष्ट्र-मतस्य विशेषः।

**रवङ्हे–** सं. (वै.) रभसे। 'तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे। ऐधेव यामन् मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन'॥ ऋ. सं. १.१६६.१॥ इत्यत्र रभसाय इति तुलनीयः।

## विदअेवदात् (वेन्दिदाद्) = सं. विदेवहितः

### १.

**दाइत्ययो–** जरठोष्ट्र-मतस्य 'बून्दहिश्न' आदिषु पह्लवी-भाषानिबद्धेषु ग्रन्थेषु 'दाइत्या' ईरानदेशस्य पुण्यतमा नदीति वर्णितम्। अस्याः तीरे जरठोष्ट्रः स्वकीयं प्रथमं धार्मिकानुष्ठानं कृतवान्। अत एव तन्मतावलम्बिनां बहुमताभूत् 'दाइत्या'।

### ३.

**जङ्ह्न् तु–** अवे. जन्- (= सं. हन्-) धातोः लोटि प्रथमपुरुषैकवचनम्। भविष्यदर्थे। हनिष्यतीत्यर्थः।

**स्नआद्दो–** अवे. < ख्श्नु– (= सं. क्ष्णु-) धातोः -त प्रत्यये। सं. क्ष्णुतो।

**वफ़्र–** अस्मादेव पारसीकभाषायां 'वर्फ़' इति शब्दः।

### ४.

**थ्र्वयाँस्तॅमअेशु–** अवे. थ्वि- (= सं. भि- 'भये') इत्यस्माद्धातोः।

**जाँफ़्नुश्व–** अवे. जप्- (= सं. जभ्-) इत्यस्माद्धातोः।

### ५.

**वज़इद्याइ–** अवे. वज् (= सं. वह्-) + तुमुन्नर्थकः द्याइ (= सं. (वै.)-ध्यै) प्रत्ययः।

### ६.

**वरॅम्–** अवे. वर्- (= सं. वृ-) इत्यस्माद्धातोः। 'नि त्वा दधे वर आ पृथिव्या' (ऋ. सं. ३.२३.४) इति तुलनीयः।

**चरॅतु–** क्रोशार्धम्।

७.

**अवस्तय–** अवे. **अव**- (= सं. **अव**-) + **स्ता**- ( = सं. **स्था**-) धातोः णिचि लोटि मध्यमपुरुषैकवचनम् ।

**मत्–** सं. (वै.) **स्मत्**। अस्मिन्निन्द्रवृजने सर्ववीराः स्मत् सूरिभिस्तव शर्मन्त्स्याम ॥ ऋ. सं. १.५१.१५ ॥ इत्यत्र 'स्मत्' इति तुलनीयः ।

८.

**तआख़्म–** सं. (वै.) **तोक्मन्**। अस्मादेव पारसीकभाषायां '**तुख़्म**– इति बीज-पर्यायः शब्दः ।



